## ॥ शब्दमञ्जरी ॥

### (अव्यय, समासप्रकरण, धातुमालिकासहिता।)

This book contains declensions of all models and peculiar words, numerals, conjugations of verbs illustrating the most important points etc. The portions dealing with indeclinables are very instructive and समास or compounds are dealt with in an original manner. Very useful Foot-notes are also given

Neatly got up on good glazed paper ... Price: 0 6 0
,, Ordinary Edition ... ,, 0 5 0

## ॥ धातुमञ्जरी—धातुकोशसहिता ॥

This is a new and exhaustive compilation of its kind planned on up-to-date and most approved methods of arrangements so as to enable the students to master the verb-system with ease and interest. To add to the usefulness of the book important foot-notes dealing with grammatical peculiarities and an alphabetical Index of the roots with meanings in English and Sanskrit are also given. This is a very rare type of the work and is sure to become an unfailing guide in the intricacies of Sanskrit verb-system.

Price: 0 8 0

## ॥ नीतिशास्त्रम् ॥

This is a collection of Moral and Wise Sayings from Mahabharata, Manusmrithi, etc. with Tamil Translation.

Price: 0 6 0

## ॥ वाक्यतत्वम् ॥

An explanatory treatise for beginners in Sanskrit syntax and composition.

Price: 0 6 0

॥ श्रीः ॥

# ॥ रामायणसूक्तिसुधाकरम् ॥

A COLLECTION OF MORAL AND WISE QUOTATIONS FROM THE RAMAYANA.

BY

A. RANGARAJA SASTRI,

*Retired District Educational officer.*

PUBLISHED BY

R. SUBRAHMANYA VADHYAR.

BOOK-SELLER & PUBLISHER,

KALPATHI—PALGHAT.

PRINTED AT

THE MANGALODAYAM PRESS,

TRICHUR.

1931

# AUTHOR'S PREFACE.

From the Brihadaranyopanishad it is found that the Vedas, the Upanishads, Ithihasas and the Puranas have originated from the breath of the Brahman the Almighty. The injenctions and the precepts found in the Vedas are indeed powerful. In the Ithihasas and in the Puranas the principles are fully explained by means of stories which are based on the ways of the world. Herein the herœs and the Heroines show by words and deeds what the correct rules of conducts are on particular occassions. Therefore it is necessary that these moral principles and rules of conduct should be well impressed on all minds.

There is a general feeling that the present system of education is godless and that there is no provision for religious and moral teaching. Efforts are being made by the Departmental Authorities to remedy the defect. The present system of running schools makes it necessary to group children of various religions and castes into one for imparting instruction. Therefore a way should be found to give moral instructions without violating the tenents of anyone religion and without running counter to the observances social and religious of anyone sect. Some

telling method should therefore be devised. This is indeed a tremendous task. That my attempt is a very feeble and poor one, I am fully conscious. There are Sanskrit and Vernacular Pandits in all High Schools. These, to my mind are best fitted to impart moral and religious instruction. The Educational rules prescribe the beginning or the end of each school day for religious and moral teaching. This rule may be observed.

Extracts from the Puranas are prescribed for teaching Sanskrit in High School classes and for all classes conversation and composition lessons are prescribed. The Ithihasas and the puranas are well fitted for these purposes

The methods of teaching naturally take after the individuality of each teacher. No hard and fast rules should therefore be enforced. However some hints are given. First the gist of the stories which forms the basis of the Moola or Religious principles desired to be impressed may be given and the gist of the verses with reference to the context afterwards. The whole lesson may be conducted in the mother tongue of the pupils. This book is mainly intented for teachers and adults. A fair knowledge of the Ramayana stories is necessary for using it with advantage. I am fully conscious that there is a good many errors

inaccurasies and omissions in the work. Imperfect knowledge and inability to comprehend fully the subject matter of the verses must have contributed a good deal towards these defects. It is my heart felt desire that these may be overlooked and suggestions given towards improvements.

It was suggested to me that an explanatory appendix in English with if possible also a free translation of the extracts would be a very useful addition. This, I am sure would go a long way towards popularising this work. But for reasons of helath it has not been possible to carry this out. It is however hoped that circumstances permitting this friendly suggestion will be carried out.

---

## PUBLISHERS' NOTE.

We have great pleasure in publishing this book the first of its kind in the field of Sanskrit literature. But we regret that the Author who had taken keen interest and great pains in compiling this book breathed his last prior to the publication of this book.

The book is now published by us at the suggestion of the friends and well wishers of the late Author.

---

# विषयानुक्रमणिका ।

## १. स्वकीयगुणाः ।

## २. बन्धूनां मित्राणां च संसर्गः।

## २. विप्रकीर्णा विषयाः ।

## ४. राजपुरुषाणामाचारा धर्माश्च ।

॥ श्रीः ॥

# ॥ रामायणसूक्तिसुधाकरम् ॥

## स्वकीयगुणाः ॥

### १. रुचिराकारः मधुरवाक्च ॥

"युवाभ्यां सह धर्मात्मा सुग्रीवः सख्यमिच्छति" इति हनूमता कथितानि वचनानि श्रुत्वा रामो लक्ष्मणमभिसम्बोध्य हनूमतः प्रशंसां करोति—

किष्किन्धाकाण्डे तृतीयः सर्गः ॥

२६. सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः ।
तमेव कांक्षमाणस्य ममान्तिकमुपागतः ॥ १

२७. तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम् ।
वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमरिन्दम ॥ २

२८. नानृग्वेदविनीतस्य नायजुर्वेदधारिणः ।
नासामवेदविदुषः शक्यमेवं प्रभाषितुम् ॥ ३

२९. नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।
बहु व्याहरतानेन न किंचिदपशब्दितम् ॥ ४

३०. न मुखे नेत्रयोर्वापि ललाटे च भ्रुवोस्तथा ।
अन्येष्वपि च गात्रेषु दोषः संविदितः क्वचित् ॥ ५

३१. अविस्तरमसंदिग्धमविलंबितमद्रुतम् ।
उरस्थं कण्ठगं वाक्यं वर्तते मध्यमे स्वरे ॥ ६

३२. संस्कारक्रमसम्पन्नामद्रुतामविलम्बिताम् ।
उच्चारयति कल्याणीं वाचं हृदयहारिणीम् ॥ ७

३३. अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया ।
कस्य नाराध्यते चित्तमुद्यतासेररेरपि ॥ ८

३४. एवंविधो यस्य दूतो न भवेत् पार्थिवस्य तु ।
सिद्ध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ ॥ ९

३५. एवं गुणगणैर्युक्ता यस्य स्युः कार्यसाधकाः ।
तस्य सिध्यन्ति सर्वार्था दूतवाक्यप्रचोदिताः ॥ १०

## २. वाचा जायमानानि इष्टानिष्टफलानि ॥

---

अशोकवनिकां प्रविश्य सीतारावणयोः सम्भाषणानि रावणगमनानन्तरं सीताया विलपनानि च श्रुतवतो हनूमतश्चिन्ता—
सुन्दरकाण्डे त्रिंशः सर्गः ॥

१८. यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥ १

१९. वानरस्य विशेषेण कथं स्यादभिभाषणम् ।
अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत् ॥ २

२०. मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता ।
सेयमालोक्य मे रूपं जानकी भाषितं तथा ॥ ३

२१. रक्षोभिस्त्रासिता पूर्वं भूयस्त्रासं गमिष्यति ।
ततो जातपरित्रासा शब्दं कुर्यान्मनस्विनी ॥ ४

२२. जानाना मां विशालाक्षी रावणं कामरूपिणम् ।
सीतया च कृते शब्दे सहसा राक्षसीगणः ॥ ५

२३. नानाप्रहरणो घोरः समेयादन्तकोपमः ।

३६. कश्च निःसंशयं कार्यं कुर्यात् प्राज्ञः ससंशयम् ।
प्राणत्यागश्च वैदेह्या भवेदनभिभाषणे ॥ ७

३७. एष दोषो महान् हि स्यान्मम सीताभिभाषणे ।
भूताश्चार्था विनश्यन्ति देशकालविरोधिताः ॥ ८

३८. विक्लवं दूतमासाद्य तमः सूर्योदये यथा ।
अर्थानर्थान्तरे बुद्धिः निश्चितापि न शोभते ॥ ९

३९. घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ।
न विनश्येत्कथं कार्यं वैक्लब्यं न कथं भवेत् ॥ १०

४२. इति संचिन्त्य हनुमान् चकार मतिमान् मतिम् ।
इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः ॥ ११

४३. शुभानि धर्मयुक्तानि वचनानि समर्पयन् ।
श्रावयिष्यामि मधुरां सर्वाणि प्रब्रुवन् गिरम् ॥ १२

४४. श्रद्धास्यामि यथा हीयं तथा सर्वं समादधे ।

~~~~~~~~~~~~~~~~~~~~

## ३. क्षान्तिः ॥

वायुना पीड्यमानाः पुत्रीः प्रति कुशनाभस्य वचनम्—
बालकाण्डे त्रयस्त्रिंशः सर्गः ॥

७. अलंकारो हि नारीणां क्षमा तु पुरुषस्य वा ॥ १

८. क्षमा दानं क्षमा सत्यं क्षमा यज्ञश्च पुत्रिकाः ॥ २
~~~~~~~~~~~~~~~~~~~~

९. क्षमा यशः क्षमा धर्मः क्षमया विष्ठितं जगत् ॥ ३

रावणं प्रति विभीषणस्य वचनानि—

सुन्दरकाण्डे द्विपञ्चाशः सर्गः ॥

८. गृह्यन्ते यदि रोषेण त्वादृशोऽपि विपश्चितः ।
ततः शास्त्रविपश्चित्त्वं श्रम एव हि केवलम् ॥ ४

---

## ४. आत्मसंयमनम् ॥

---

यौवराज्याभिषेचनं पुरस्कृत्य राममुपादिशति दशरथः—

अयोध्याकाण्डे तृतीयः सर्गः ॥

४२. गुणवत्यपि तु स्नेहात् पुत्र वक्ष्यामि ते हितम् । १
भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः ॥

४३. कामक्रोधसमुत्थानि त्यजेथा व्यसनानि च ।
परोक्षया वर्तमानो वृत्त्या प्रत्यक्षया यथा ॥ २

४४. अमात्यप्रभृतीस्सर्वाः प्रकृतीश्चानुरंजय ।
गोष्ठागारायुधागारैः कृत्वा सन्निचयान्बहून् ॥ ३

४५. इष्टानुरक्तप्रकृतिर्यः पालयति मेदिनीम् ।
तस्य नन्दन्ति मित्राणि लब्ध्वामृतमिवामराः ॥ ४

४६. तस्मात् पुत्र त्वमात्मानं नियम्यैवं समाचर । ५

## ५. दैवं पुरुषकारश्च ॥

श्रीरामं वनवासान्निवर्तयितुं लक्ष्मणस्य श्रमः —
अयोध्याकाण्डे त्रयोविंशः सर्गः ॥

१७. वीराः सम्भावितात्मानो न दैवं पर्युपासते ।
दैवं पुरुषकारेण यः समर्थः प्रबाधितुम् ॥ १

१८. द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च ॥ २

२०. अत्यंकुशमिवोद्दामं गजं मदबलोद्धतम् ॥ ३

२१. प्रधावितमहं दैवं पौरुषेण निवर्तये ॥ ४

३०. न शोभार्थाविमौ बाहू न धनुर्भूषणाय मे ॥ ५

३१. नासिराबन्धनार्थाय न शराः स्तम्भहेतवः ॥ ६
अमित्रदमनार्थं मे सर्वमेतच्चतुष्टयम् ॥

३९. वसूनां च विमोक्षस्य सुहृदां पालनस्य च ।
अनुरूपाविमौ बाहू राम कर्म करिष्यतः ॥ ७

## ६. विभवत्यागः आडंबरं च ॥

अरण्यं प्रति प्रस्थितस्य रामस्य दशरथं प्रति वचनानि —
अयोध्याकाण्डे सप्तत्रिंशः सर्गः ॥

२. त्यक्तभोगस्य मे राजन् वने वन्येन जीवतः ।
किं कार्यमनुयात्रेण त्यक्तसङ्गस्य सर्वतः ॥ १

३. यो हि दत्त्वा गजश्रेष्ठं कक्ष्यायां कुरुते मनः ।
रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम् ॥ २

४. तथा मम सतां श्रेष्ठ किं ध्वजिन्या जगत्पते ।
सर्वाण्येवानुजानामि चीराण्येवानयन्तु मे ॥ ३

## ७. संचितकर्मफलोपभोगः ॥

वनं गते रामे दशरथस्य प्रलपनानि—
अयोध्याकाण्डे एकोनचत्वारिंशः सर्गः ॥

४. मन्ये खलु मया पूर्वं विवत्सा बहवः कृताः ।
प्राणिनो हिंसिता वापि तस्मादिदमुपस्थितम् ॥ १

अयोध्याकाण्डे द्विचत्वारिंशः सर्गः ॥

११. हत्वेव ब्राह्मणं कामात् स्पृष्ट्वाग्निमिव पाणिना ।

अन्वतप्यत धर्मात्मा पुत्रं संचिन्त्य तापसम् ॥ २

अयोध्याकाण्डे त्रिषष्टितमः सर्गः ॥

६. यदाचरति कल्याणि शुभं वा यदि वाऽशुभम् ।
तदेव लभते भद्रे कर्ता कर्मजमात्मनः ॥ ३

७. गुरुलाघवमर्थानां आरम्भे कर्मणां फलम् ।
दोषं वा यो न जानाति स बाल इति होच्यते ॥ ४

८. कश्चिदाम्रवणं छित्वा पलाशांश्च निषिञ्चति ।
पुष्पं दृष्ट्वा फले गृध्नुः स शोचति फलागमे ॥ ५

९. अविज्ञाय फलं यो हि कर्म त्वेवानुधावति ।
स शोचेत्फलवेलायां यथा किंशुकसेचकः ॥ ६

१०. सोऽहमाम्रवणं छित्वा पलाशांश्च न्यषेचयम् ।
रामं फलागमे त्यक्त्वा पश्चाच्छोचामि दुर्मतिः ॥ ७

अयोध्याकाण्डे चतुष्षष्टितमः सर्गः

६०. तस्यायं कर्मणो देवि विपाकः समुपस्थितः ।
अपथ्यैः सह संभुक्ते व्याधिरन्नरसे यथा ॥ ८

अयोध्याकाण्डे द्विषष्टितमः सर्गः ॥

१६. शक्य आपतितः सोढुं प्रहारो रिपुहस्ततः ।
सोढुमापतितः शोकः सुसूक्ष्मोपि न शक्यते ॥ ९

## ८. मलिनीकरणानि पापकर्माणि ॥

---

रामप्रवासने मम कश्चिदपि सम्बन्धो नास्ति इति कौसल्यां
प्रबोधयितुं भरतस्य शपथवाक्यानि—
अयोध्याकाण्डे पञ्चसप्ततितमः सर्गः ॥

२०. आर्ये कस्मादजानन्तं गर्हसे मम किल्बिषम् ।
विपुलां च मम प्रीतिं स्थिरां जानासि राघवे ॥ १

२१. कृता शास्त्रानुगा बुद्धिः मा भूत् तस्य कदाचन ।
सत्यसन्धः सतां श्रेष्ठो यस्यार्योऽनुमते गतः ॥ २

२२. प्रेष्यं पापीयसां यातु सूर्यं च प्रतिमेहतु ।
हन्तु पादेन गां सुप्तां यस्यार्योऽनुमते गतः ॥ ३

२३. कारयित्वा महत्कर्म भर्ता भृत्यमनर्थकम् ।
अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥ ४

२४. परिपालयमानस्य राज्ञो भूतानि पुत्रवत् ।
सततं द्रुह्यतां पापं यस्यार्योऽनुमते गतः ॥ ५

२५. बलिषड्भागमुद्धृत्य नृपस्यारक्षतः प्रजाः ।
अधर्मो यस्तु सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥ ६

२६. संश्रुत्य च तपस्विभ्यः यज्ञे वै सत्रदक्षिणाम् ।
तां विप्रलपतां पापं यस्यार्योऽनुमते गतः ॥ ७

२७. हस्त्यश्वरथसम्बाधे युद्धे शस्त्रसमाकुले ।
मा स्म कार्षीत्सतां धर्मं यस्यार्योऽनुमते गतः ॥ ८

२८. उपदिष्टं सुसूक्ष्मार्थं शास्त्रं यत्नेन धीमता ।
स नाशयेत्तु दुष्टात्मा यस्यार्योऽनुमते गतः ॥ ९

२९. मां च तं व्यूढबाह्वंसं चन्द्रार्कसमतेजसम् ।
द्राक्षीद्राज्यस्थमासीनं यस्यार्योऽनुमते गतः ॥ १०

३०. पायसं कृसरं छागं वृथा सोऽश्नातु निर्घृणः ।
गुरूंश्चाप्यवजानातु यस्यार्योऽनुमते गतः ॥ ११

३१. गाश्च स्पृशतु पादेन गुरून् परिवदेत्स्वयम् ।
मित्रे द्रुह्येत सोऽत्यन्तं यस्यार्योऽनुमते गतः ॥ १२

३२. विश्वासात्कथितं किञ्चित्परिवादं मिथः क्वचित् ।
विवृणोतु स दुष्टात्मा यस्यार्योऽनुमते गतः ॥ १३

३३. अकर्ता ह्यकृतज्ञश्च त्यक्तात्मा निरपत्रपः ।
लोके भवतु विद्वेष्यो यस्यार्योऽनुमते गतः ॥ १४

३४. पुत्रैः दारैश्च भृत्यैश्च स्वगृहे परिवारितः ।

स एको मृष्टमश्नातु यस्यार्योऽनुमते गतः ॥ १५

३५. अप्राप्य सदृशान् दारान् अनपत्यः प्रमीयताम् ।
अनवाप्य क्रियां धर्म्यां यस्यार्योऽनुमते गतः ॥ १६

३६. मात्मनः सन्ततिं द्राक्षीत्स्वेषु दारेषु दुःखितः ।
आयुः समग्रमप्राप्य यस्यार्योऽनुमते गतः ॥ १७

३७. राजस्त्रीबालवृद्धानां वधे यत्पापमुच्यते ।
भृत्यत्यागे च यत्पापं तत्पापं प्रतिपद्यताम् ॥ १८

३८. लाक्षया मधुमांसेन लोहेन च विषेण च ।
सदैव बिभृयाद्भृत्यान्यस्यार्योऽनुमते गतः ॥ १९

३९. सङ्ग्रामे समुपोढे तु शत्रुपक्षभयङ्करे ।
पलायमानो वध्येत यस्यार्योऽनुमते गतः ॥ २०

४०. कपालपाणिः पृथिवीमटतां चीरसंवृतः ।
भिक्षमाणो यथोन्मत्तो यस्यार्योऽनुमते गतः ॥ २१

४१. मद्ये प्रसक्तो भवतु स्त्रीष्वक्षेषु च नित्यशः ।
कामक्रोधाभिभूतस्तु यस्यार्योऽनुमते गतः ॥ २२

४२. मा स्म धर्मे मनो भूयादधर्मं स निषेवताम् ।
अपात्रवर्षी भवतु यस्यार्योऽनुमते गतः ॥ २३

४३. संचितान्यस्य वित्तानि विविधानि सहस्रशः ।
दस्युभिर्विप्रलुप्यन्तां यस्यार्योऽनुमते गतः ॥ २४

४४. उभे संध्ये शयानस्य यत्पापं परिकल्प्यते ।
तच्च पापं भवेत् तस्य यस्यार्योऽनुमते गतः ॥ २५

४५. यदग्निदायके पापं यत्पापं गुरुतल्पगे ।
मित्रद्रोहे च यत्पापं तत्पापं प्रतिपद्यताम् ॥ २६

४६. देवतानां पितॄणां च मातापित्रोस्तथैव च ।
मा स्म कार्षीत्स शुश्रूषां यस्यार्योऽनुमते गतः ॥ २७

४७. सतां लोकात्सतां कीर्त्याः सज्जुष्टात्कर्मणस्तथा ।
भ्रश्यतु क्षिप्रमद्यैव यस्यार्योऽनुमते गतः ॥ २८

४८. अपास्य मातृशुश्रूषामनर्थे सोऽवतिष्ठताम् ।
दीर्घबाहुर्महावक्षा यस्यार्योऽनुमते गतः ॥ २९

४९. बहुपुत्रो दरिद्रश्च ज्वररोगसमन्वितः ।
स भूयात्सततं क्लेशी यस्यार्योऽनुमते गतः ॥ ३०

५०. आशामाशंसमानानां दीनानामूर्ध्वचक्षुषाम् ।
अर्थिनां वितथां कुर्याद्यस्यार्योऽनुमते गतः ॥ ३१

५१. मायया रमतां नित्यं परुषः पिशुनोऽशुचिः ।

राज्ञो भीतस्त्वधर्मात्मा यस्यार्योऽनुमते गतः ॥ ३२

५२. ऋतुस्नातां सतीं भार्यां ऋतुकालानुरोधिनीम् ।
अतिवर्तेत दुष्टात्मा यस्यार्योऽनुमते गतः ॥ ३३

५३. धर्मदारान् परित्यज्य परदारान्निषेवितुम् ।
त्यक्तधर्मरतिर्मूढो यस्यार्योऽनुमते गतः ॥ ३४

५४. विप्रलुप्तप्रजातस्य दुष्कृतं ब्राह्मणस्य यत् ।
तदेव प्रतिपद्येत यस्यार्योऽनुमते गतः ॥ ३५

५५. पानीयदूषके पापं तथैव विषदायके ।
यत्तदेकस्स लभतां यस्यार्योऽनुमते गतः ॥ ३६

५६. ब्राह्मणायोद्यतां पूजां विहन्तु कलुषेन्द्रियः ।
बालवत्सां च गां दोग्धु यस्यार्योऽनुमते गतः ॥ ३७

५७. तृषार्तं सति पानीये विप्रलम्भेन योजयेत् ।
लभेत तस्य यत्पापं यस्यार्योनुमते गतः ॥ ३८

५९. भक्त्या विवदमानेषु मार्गमाश्रित्य पश्यतः ।
तस्य पापेन युज्येत यस्यार्योनुमते गतः ॥ ३९

६०. विहीनां पतिपुत्राभ्यां कौसल्यां पार्थिवात्मजः ।
एवमाश्वासयन्नेव दुःखार्तो निपपातह ॥ ४०

## ९. अर्थागमस्य पन्थाः ॥

रामं अयोध्यां प्रतिनिवर्तयितुं बहुधा प्रार्थयन्तं लक्ष्मणं प्रति श्रीरामस्य वचनानि—
अयोध्याकाण्डे सप्तनवतितमः सर्गः ॥

४. यद्द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत् ।
नाहं तत्प्रतिगृह्णीयां भक्षान् विषकृतानिव ॥ १

५. धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण ।
इच्छामि भवतामर्थ एतत्प्रतिशृणोमि ते ॥ २

६. भ्रातॄणां संग्रहार्थं च सुखार्थं चापि लक्ष्मण ।
राज्यमप्यहमिच्छामि सत्येनायुधमालभे ॥ ३

७. नेयं मम मही सौम्य दुर्लभा सागरांबरा ।
न हीच्छेयमधर्मेण शक्रत्वमपि लक्ष्मण ॥ ४

## १०. के भयावहाः ॥

भरतं प्रति श्रीरामस्य वचनानि—
अयोध्याकाण्डे शततमः सर्गः ॥

२९. उपायकुशलं वैद्यं भृत्यसंदूषणे रतम् ।
शूरमैश्वर्यकामं च यो न हन्ति स वध्यते ॥ १

## ११. कामप्रभवा दोषाः ॥

श्रीरामस्य सीतायाश्च सम्भाषणम्—
आरण्यकाण्डे नवमः सर्गः ॥

२. अयं धर्मः सुसूक्ष्मेण विधिना प्राप्यते महान् ।
निवृत्तेन तु शक्योऽयं व्यसनात्कामजादिव ।। १

३. त्रीण्येव व्यसनान्यत्र कामजानि भवन्त्युत ।
मिथ्या वाक्यं परमकं तस्माद्गुरुतरावुभौ ॥ २

४. परदाराभिगमनं विना वैरं च रौद्रता ।
मिथ्यावाक्यं न ते भूतं न भविष्यति राघव ॥ ३

५. कुतोऽभिलाषणं स्त्रीणां परेषां धर्मनाशनम् ।
तव नास्ति मनुष्येन्द्र नचाभूत्तो कदाचन ॥ ४

६. मनस्यपि तथा राम न चैतद्विद्यते क्वचित् ।
स्वदारनिरतस्त्वं च नित्यमेव नृपात्मज ॥ ५

७. धर्मिष्ठस्सत्यसन्धश्च पितुर्निर्देशकारकः ।
सत्यसन्ध महाभाग श्रीमल्लक्ष्मणपूर्वज ॥ ६

८. त्वयि सत्यं च धर्मश्च त्वयि सर्वं प्रतिष्ठितम् ।
तच्च सर्वं महाबाहो शक्यं धर्तुं जितेन्द्रियैः ॥ ७

## १२. आयुधानां सन्निहितत्वे सम्भावयितुं शक्या दोषाः ॥

---

रक्षोवधार्थं दण्डकारण्यं प्रस्थातुमुद्युक्तं श्रीरामं प्रति सीतायाः वचनानि—
आरण्यकाण्डे नवमः सर्गः ॥

९. तव वश्येन्द्रियत्वं च जानामि शुभदर्शन ।
तृतीयं यदिदं रौद्रं परप्राणाभिहिंसनम् ॥ १

१०. निर्वैरं क्रियते मोहात्तच्च ते समुपस्थितम् ।
प्रतिज्ञातः त्वया वीर दण्डकारण्यवासिनाम् ॥ २

११. ऋषीणां रक्षणार्थाय वध संयति रक्षसाम् ।
एतन्निमित्तं च वनं दण्डका इति विश्रुतम् ॥ ३

१२. प्रस्थितस्त्वं सह भ्राता धृतवाणशरासनः ।
ततस्त्वां प्रस्थितं दृष्ट्वा मम चिन्ताकुलं मनः ॥ ४

१३. त्वद्वृत्तं चिन्तयन्त्या वै भवेन्निश्रेयसं हितम् ।
नहि मे रोचते वीर गमनं दण्डकान् प्रति ॥ ५

१४. कारणं तत्र वक्ष्यामि वदन्त्याः श्रूयतां मम ।
त्वं हि बाणधनुष्पाणिः भ्राता सह वनं गतः ॥ ६

१५. दृष्ट्वा वनचरान् सर्वान् कच्चित्कुर्याः शरव्ययम् ।

क्षत्रियाणांचहि धनुर्हुताशस्येन्धनानि च ॥ ७

१६. समीपतःस्थितं तेजो बलमुच्छ्रयते भृशम् ।
पुरा किल महाबाहो तपस्वी सत्यवाक्शुचिः ॥ ८

२४. अग्निसंयोगवद्धेतुः शस्त्रसंयोग उच्यते ।
स्नेहाच्च बहुमानाच्च स्मारये त्वां न शिक्षये ॥ ९

२६. क्षत्रियाणां तु वीराणां वनेषु निरतात्मनाम् ॥ १०

२७. धनुषा कार्यमेतावदार्तानामभिरक्षणम् ।
क्व च शस्त्रं क्व च वनं क्व च क्षात्रं तपः क्व च ॥ ११

२८. व्याविद्धमिदमस्माभिर्देशधर्मस्तु पूज्यताम् ।
तदार्य कलुषा बुद्धिर्जायते शस्त्रसेवनात् ॥ १२

३१. धर्मेण लभते सर्वं धर्मसारमिदं जगत् ।
आत्मानं नियमैस्तैस्तैः कर्शयित्वा प्रयत्नतः ॥ १३

३२. प्राप्यते निपुणैर्धर्मो न सुखाल्लभ्यते सुखम् ।
नित्यं शुचिमतिः सौम्य चर धर्मं तपोवने ॥ १४

## १३. शस्त्रधारणफलम् ॥

शरणागतानां रक्षणार्थं न तु प्राणिनां हिंसार्थं —
आरण्यकाण्डे दशमः सर्गः ॥

३. क्षत्रियैर्धार्यते चापः नार्तशब्दो भवेदिति ॥ १

४. मां सीते स्वयमागम्य शरण्या शरणं गताः ।
ते चार्ता दण्डकारण्ये मुनयः संशितव्रताः ॥ २

५. वसन्तो धर्मनिरताः वने मूलफलाशनाः ।
न लभन्ते सुखं भीता राक्षसैः क्रूरकर्मभिः ॥ ३

६. काले काले च निरता नियमैर्विविधैर्वने ।
भक्ष्यन्ते राक्षसैर्भीमैर्नरमांसोपजीविभिः ॥ ४

७. ते भक्ष्यमाणा मुनयो दण्डकारण्यवासिनः ।
अस्मानभ्यवपद्येति मामूचुर्द्विजसत्तमाः ॥ ५

८. मया तु वचनं श्रुत्वा तेषामेवं मुखाच्च्युतम् ।
कृत्वा चरणशुश्रूषां वाक्यमेतदुदाहृतम् ॥ ६

९. प्रसीदन्तु भवन्तो मे ह्रीरेषा हि ममातुला ।
यदीदृशैरहं विप्रैरुपस्थेयैरुपास्थितः ॥ ७

१५. किं करोमीति च मया व्याहृतं द्विजसन्निधौ ।
सर्वैरेतैः समागम्य वागियं समुदाहृता ॥ ८

१६. तदर्द्यमानान्रक्षोभिर्दण्डकारण्यवासिभिः ।
रक्ष नस्त्वं सह भ्रात्रा त्वन्नाथा हि वयं वने ॥ ९

१७. मया चैतद्वचः श्रुत्वा कार्त्स्न्येन परिपालनम् ।
ऋषीणां दण्डकारण्ये संश्रुतं जनकात्मजे ॥ १०

१८. संश्रुत्य च न शक्ष्यामि जीवमानः प्रतिश्रवम् ।
मुनीनां अन्यथा कर्तुं सत्यमिष्टं हि मे सदा ॥ ११

१९. अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् ।
न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥ १२

२०. तदवश्यं मया कार्यमृषीणां परिपालनम् ।
अनुक्तेनापि वैदेहि प्रतिज्ञाय तु किं पुनः ॥ १३

## १४. स्त्रीणां गुणाः ॥

अगस्त्येन सीताया गुणवर्णनम् —
आरण्यकाण्डे त्रयोदशः सर्गः ॥

५. एषा हि प्रकृतिः स्त्रीणामा सृष्टे रघुनन्दन ।
समस्थमनुरंजन्ति विषमस्थं त्यजन्ति च ॥ १

६. शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा ।
गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥ २

७. इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता ।
श्लाघ्या च व्यपदेश्या च यथा देवी ह्यरुन्धती ॥ ३

---

## १५. स्त्रीणां केचित् दुर्गुणाः ॥

---

हेममृगाकृतिं मारीचमस्त्रेण हतवति रामे, मारीचेन कृतं विलापं श्रुतवत्या सीतया रामस्यापायं विलाप इति शङ्कमानया रामं प्रतिगन्तुं प्रेरितो लक्ष्मणः । सः सकारणं तेन न गन्तव्यमिति सूचितवान् । सीता अतीवक्रुद्धा लक्ष्मणं प्रति परुषवाक्यान्युक्तवती । सीतां प्रति प्रतिवचनानि ददाति लक्ष्मणः—

आरण्यकाण्डे पञ्चचत्वारिंशः सर्गः ॥

२८. उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ॥ १

२९. स्वभावस्त्वेष नारीणामेव लोकेषु दृश्यते ॥ २

३०. विमुक्तधर्माश्चपलास्तीक्ष्णा भेदकराः स्त्रियः ।
न सहे हीदृशं वाक्यं वैदेहि जनकात्मजे ॥ ३

३१. श्रोत्रयोरुभयोर्मेऽद्य तप्तनाराचसन्निभम् ।
उपशृण्वन्तु मे सर्वे साक्षिभूता वनेचराः ॥ ४

३२. न्यायवादी यथान्यायं उक्तोऽहं परुषं त्वया ।
धिक्त्वामद्य प्रणश्यत्वं यन्मामेवं विशंकसे ॥ ५

३३. स्त्रीत्वं दुष्टं स्वभावेन गुरुवाक्येऽव्यवस्थितम् ।
गमिष्ये यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने ॥ ६

३४. रक्षन्तु त्वां विशालाक्षि समग्रा वनदेवताः ।
निमित्तानि हि घोराणि यानि प्रादुर्भवन्ति मे ॥ ७

३५. अपि त्वां सह रामेण पश्येयं पुनरागतः ।
न वेत्येतन्न जानामि वैदेहि जनकात्मजे ॥ ८

## १६. विपदि धैर्यम् ॥

सीतापहरणानन्तरं विलपन्तं श्रीरामं प्रति लक्ष्मणस्य वचनानि—
आरण्यकाण्डे षट्षष्टितमः सर्गः ॥

५. यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यसे ।
प्राकृतश्चाल्पसत्वश्च इतरः कः सहिष्यति ॥ १

६. दुःखितो हि भवान् लोकान् तेजसा यदि धक्ष्यते ।
आर्ताः प्रजा नरव्याघ्र क नु यास्यन्ति निर्वृतिम् ॥ २

११. सुमहान्त्यपि भूतानि देवाश्च पुरुषर्षभ ।

न दैवस्य प्रमुंचन्ति सर्वभूतादिदेहिनः ॥ ३

१५. तत्वतो हि नरश्रेष्ठ बुद्ध्या समनुचिन्तय ।
बुद्ध्या युक्ता महाप्राज्ञा विजानन्ति शुभाशुभे ॥ ४

१६. अदृष्टगुणदोषाणां अधृतानां च कर्मणां ।
नान्तरेण क्रियातेषां फलमिष्टं प्रवर्तते ॥ ५

१८. बुद्धिश्च ते महाप्राज्ञ देवैरपि दुरन्वया ।
शोकेनाभिप्रसुप्तं ते ज्ञानं संबोधयाम्यहम् ॥ ६

१९. दिव्यं च मानुषं च त्वं आत्मनश्च पराक्रमम् ।
इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां वधे ॥ ७

२०. किं ते सर्वविनाशेन कृतेन पुरुषर्षभ ।
तमेव त्वं रिपुं पापं विज्ञायोद्धर्तुमर्हसि ॥ ८

किष्किन्धाकाण्डे चतुष्षष्टितमः सर्गः ॥

११. न विषादे मनः कार्यं विषादो दोषवत्तमः ।
विषादो हन्ति पुरुषं बालं क्रुद्ध इवोरगः ॥ ९

१२. विषादोऽयं प्रसहते विक्रमे पर्युपस्थिते ।
तेजसा तस्य हीनस्य पुरुषार्थो न सिध्यति ॥ १०

सुग्रीवस्य श्रीरामं प्रति वचनानि ॥

९. व्यसने वा अर्थकृच्छ्रे वा भये वा जीवितान्तके ।
विमृशन्वै स्वया बुद्ध्या धृतिमान्नावसीदति ॥ ११

१०. बालिशस्तु नरो नित्यं वैक्लब्यं योऽनुवर्तते ।
स मज्जत्यवशः शोके भाराक्रान्तेव नौर्जले ॥ १२

१२. ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम् ।
तेजश्च क्षीयते तेषां न त्वं शोचितुमर्हसि ॥ १३

१३. शोकेनाभि प्रपन्नस्य जीविते चापि संशयः

## १७. मित्रलक्षणानि ॥

श्रीरामं प्रति सुग्रीवस्य वचनानि—
किष्किन्धाकाण्डे अष्टमः सर्गः ॥

८. आढ्यो वापि दरिद्रो वा दुःखितः सुखितोपि वा ।
निर्दोषो वा सदोषो वा वयस्यः परमा गतिः ॥ १

९. धनत्यागः सुखत्यागो देहत्यागोपि वा पुनः ।
वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥ २

## १८. सुरापानजा दोषाः ॥

तारां प्रति लक्ष्मणस्योक्तिः—

किष्किन्धाकाण्डे त्रयस्त्रिंशः सर्गः ॥

४६. नहि धर्मार्थसिद्ध्यर्थं पानमेवं प्रशस्यते ।
पानादर्थश्च धर्मश्च कामश्च परिहीयते ॥ १

४७. धर्मलोपो महांस्तावत्कृते ह्यप्रतिकुर्वतः ।
अर्थलोपश्च मित्रस्य नाशे गुणवतो महान् ॥ २

४८. मित्रं ह्यर्थगुणश्रेष्ठं सत्यधर्मपरायणम् ।
तद्द्वयं तु परित्यक्तं न तु धर्मे व्यवस्थितम् ॥ ३

४९. तदेवं प्रस्तुते कार्ये कार्यमस्माभिरुत्तरम् ।
यत्कार्यं कार्यतत्त्वज्ञे तदुदाहर्तुमर्हसि ॥ ४

## १९. बलहीनेषु कोपः ॥

लक्ष्मणं प्रति तारायाः वचनानि—

किष्किन्धाकाण्डे त्रयस्त्रिंशः सर्गः ॥

५०. कोपं कथं नाम गुणप्रकृष्टः
कुमार कुर्यादपकृष्टसत्त्वे ।

कस्त्वद्विधः कोपवशं हि गच्छे-
त्सत्त्वावरुद्धस्तपसः प्रसूतिः ॥ १

५३. जानामि रोषं हरिवीरबन्धो-
र्जानामि कार्यस्य च कालसङ्गम् ।
जानामि कार्यं त्वयि यत्कृतं न-
स्तच्चापि जानामि यदत्र कार्यम् ॥ २

५४. तच्चापि जानामि यथाविषह्यं
बलं नरश्रेष्ठ शरीरजस्य ।
जानामि यस्मिंश्च जनेवबद्धं
कामेन सुग्रीवमसक्तमद्य ॥ ३

५५. न कामतन्त्रे तव बुद्धिरस्ति
त्वं वै यथा मन्युवशं प्रपन्नः ।
न देशकालौ हि न चार्थधर्मा-
ववेक्षते कामरतिर्मनुष्यः ॥ ४

~~~~~~~~~~~~

## २०. कृतघ्नता ॥

---

सुग्रीवं प्रति लक्ष्मणस्य वचनानि—
किष्किन्धाकाण्डे चतुस्त्रिंशः सर्गः ॥

७. सत्त्वाभिजनसम्पन्नः सानुक्रोशो जितेन्द्रियः ।
~~~~~~~~~~~~

कृतज्ञः सत्यवादी च राजा लोके महीयते ॥ १

८. यस्तु राजास्थितो धर्मे मित्राणामुपकारिणाम् ।
मिथ्या प्रतिज्ञां कुरुते को नृशंसतरस्ततः ॥ २

९. शतमश्वानृते हन्ति सहस्रं तु गवानृते ।
आत्मानं स्वजनं हन्ति पुरुषः पुरुषानृते ॥ ३

१०. पूर्वं कृतार्थो मित्राणां न तत्प्रतिकरोति यः ।
कृतघ्नः सर्वभूतानां स वध्यः प्लवगेश्वर ॥ ४

१२. ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ५

१३. अनार्यस्त्वं कृतघ्नश्च मिथ्यावादी च वानर ।
पूर्वं कृतार्थो रामस्य न तत्प्रतिकरोषि यत् ॥ ६

## २१. उत्साहः ॥

यावच्छक्यं लङ्कां सीतादर्शनार्थं विचिन्वतः हनूमतो विचारः—
सुन्दरकाण्डे द्वादशः सर्गः ॥

१०. अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तते ॥ १

११. करोति सफलं जन्तोः कर्म यच्च करोति सः ।
तस्मादनिर्वेदकरं यत्नं कुर्यादनुत्तमम् ॥ २

## २२. आत्महत्तिः ॥

निराशया मनःक्लेशं गतवतः हनूमतः चिन्ता —

सुन्दरकाण्डे त्रयोदशः सर्गः ॥

४७. विनाशे बहवो दोषा जीवन् भद्राणि पश्यति ॥ १
४८. तस्मात्प्राणान्धारयिष्यामि ध्रुवो जीवति सङ्गमः॥ २

## २३. दुराचारः ॥

रावणं प्रति विभीषणः —

युद्धकाण्डे ॥

यस्य धर्मो न बलवान् स्यादयं राक्षसेश्वरः ।
स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥

अस्य क्रूरैरसंगैश्च कर्मभिर्लोककुत्सितैः ।
तेनबिभ्यन्तिखल्वस्माल्लोँकास्सामरदानवाः ॥

## २४. कोपः ॥

लङ्कादहनानन्तरं हनूमतः चिन्ता —
सुन्दरकाण्डे पञ्चपंचाशः सर्गः ॥

४. धन्यास्ते पुरुषश्रेष्ठा ये बुद्ध्या कोपमुत्थितम् ।
निरुन्धन्ति महात्मानो दीप्तमग्निमिवांभसा ॥ १

५. क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा नरः साधूनधिक्षिपेत् ॥ २

६. वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥ ३

७. यः समुत्पतितं क्रोधं क्षमयैव निरस्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ४

८. धिगस्तु मां सुदुर्बुद्धिं निर्लज्जं पापकृत्तमम् ।
अचिन्तयित्वा तां सीतां अग्निदं स्वामिघातकं ॥ ५

९. यदि दग्धा त्वियं लङ्का नूनमार्यापि जानकी ।
दग्धा तेन मया भर्तुर्हतं कार्यमजानता ॥ ६

१०. ईषत्कार्यमिदं कार्यं कृतमासीन्नसंशयः ।
तस्य क्रोधाभिभूतेन मयामूलक्षयः कृतः ॥ ७

१७. धिगस्तु राजसम्भावमनीशमनवस्थितम् ।
ईश्वरेणापि यद्रागान्मया सीता न रक्षिता ॥ ८

# बन्धूनां मित्राणां च संसर्गः ॥

## १. ज्येष्ठपुत्रः कनीयान् च ॥

बालकाण्डे एकषष्टितमः सर्गः ॥

१९. प्रायेण हि नरश्रेष्ठ ज्येष्ठाश्च पितृवल्लभाः ।
मातॄणां च कनीयांसः तस्माद्रक्षे कनीयसम् ॥ १

## २. बन्धुगृहम् ॥

बालकाण्डे त्रिसप्ततितमः सर्गः ॥

१४. कःस्थितः प्रतिहारो मे कस्याज्ञा सम्प्रतीक्ष्यते ।
स्वगृहे को विचारोऽस्ति यथा राज्यमिदं तव ॥ १

## ३. पितुराज्ञा भ्रातॄणां स्नेहः ॥

अयोध्याकाण्डे प्रथमः सर्गः ॥

५. सर्व एव तु तस्येष्टाः चत्वारः पुरुषर्षभाः ।
स्वशरीराद्विनिर्वृत्ताश्चत्वारइव बाहवः ॥ १

## ४. पितुराज्ञा ॥

वन प्रस्थितवता रामेण कैकेय्या वरद्वयस्याभ्युपगमः—
अयोध्याकाण्डे नवदशः सर्गः ।

२०. नाहमर्थपरो देवि लोकमावस्तुमुत्सहे ।
विद्धि मामृषिभिस्तुल्यं केवलं धर्ममास्थितम् ॥ १

२१. यदत्रभवतः किंचित् शक्यं कर्तुं प्रियं मया ।
प्राणानपि परित्यज्य सर्वथा कृतमेव तत् ॥ २

२२. नह्यतो धर्मचरणं किंचिदस्ति महत्तरम् ।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥ ३

२३. अनुक्तोप्यत्रभवता भवत्या वचनादहम् ।
वने वत्स्यामि विजने वर्षाणीह चतुर्दश ॥ ४

३२. न चास्य महतीं लक्ष्मीं राज्यनाशोपकर्षति ।
लोककान्तस्य कान्तत्वात् शीतरश्मेरिवक्षपा ॥ ५

३३. नवनं गन्तुकामस्य त्यजतश्च वसुन्धराम् ।
सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥ ६

## ५. पुत्रशोकः वन्ध्यात्वं च ॥

---

श्रीरामं प्रति कौसल्याया वचनानि ॥

अयोध्याकाण्डे विंशः सर्गः ॥

३६. यदि पुत्र न जायेथा मम शोकाय राघव ॥ १

३७. न स्म दुःखमतो भूयः पश्येयमहमप्रजाः ।
एक एव हि वन्ध्यायाः शोको भवति मानसः ॥ २

३८. अप्रजास्मीति सन्तापो न ह्यन्यः पुत्र विद्यते ।
न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे ॥ ३

३९. अपि पुत्रे तु पश्येयमिति रामास्थितं मया ।
सा बहून्यमनोज्ञानि वाक्यानि हृदयच्छिदाम् ॥ ४

४०. अहं श्रोष्ये सपत्नीनामवराणां वरा सती ।
अतो दुःखतरं किन्नु प्रमदानां भविष्यति ॥ ५

४१. ममशोको विलापश्च यादृशोऽयमनन्तकः ।
त्वयि सन्निहितेप्येवं अहमासं निराकृता ॥ ६

४२. किं पुनः प्रोषिते तात ध्रुवं मरणमेव मे ।
अत्यन्तं निगृहीतास्मि भर्तुर्नित्यमसम्मता ॥ ७

कुपथाश्रितः पिता न बहुमानमर्हति इति वदति लक्ष्मणः ।
श्रीरामस्य प्रतिवचनम्—
अयोध्याकाण्डे एकविंशः सर्गः ।

१३. गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ ८

४१. धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितं ।
धर्मसंश्रितमेतच्च पितुर्वचनमुत्तमम् ॥ ९

भरतं प्रति श्रीरामस्य वचनानि—
अयोध्याकाण्डे चतुरुत्तरशततमः सर्गः ॥

१८. कामाकारो महाप्राज्ञ गुरूणां सर्वदानघ ।
उपपन्नेषु दारेषु पुत्रेषु च विधीयते ॥ १०

२१. यावत्पितरि धर्मज्ञे गौरवं लोकसत्कृतम् ।
तावद्धर्मभृतां श्रेष्ठ जनन्यामपि गौरवम् ॥ ११

२२. एताभ्यां धर्मशीलाभ्यां वनं गच्छेति राघव ।
मातापितृभ्यामुक्तोहं कथमन्यत्समाचरे ॥ १२

२३. त्वया राज्यमयोध्यायां प्राप्तव्यं लोकसत्कृतम् ।
वस्तव्यं दण्डकारण्ये मया वल्कलवाससा ॥ १३

२५. स च प्रमाणं धर्मात्मा राजा लोकगुरुस्तव ।
पित्रा दत्तं यथा भागं उपभोक्तुं त्वमर्हसि ॥ १४

बन्धूनां मित्राणां च संसर्गः ॥ 

## ६. पतिव्रताधर्मः ॥

कौसल्यां प्रति श्रीरामस्य वचनानि—

अयोध्याकाण्डे चतुर्विंशः सर्गः ॥

१२. भर्तुः किल परित्यागो नृशंसः केवलं स्त्रियः ।
स भवत्या न कर्तव्यो मनसापि विगर्हितः ॥ १

१३. यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः ।
शुश्रूषा क्रियतां तावत् स हि धर्मः सनातनः ॥ २

२५. व्रतोपवासनिरता या नारी परमोत्तमा ॥ ३

२६. भर्तारं नानुवर्तेत सा तु पापगतिर्भवेत् ।
भर्तुः शुश्रूषया नारी लभते स्वर्गमुत्तमम् ॥ ४

२७. अपि या निर्नमस्कारा निवृत्ता देवपूजनात् ।
शुश्रूषामेव कुर्वीत भर्तुः प्रियहिते रता ॥ ५

२८. एष धर्मः पुरा दृष्टो लोके वेदे श्रुतः स्मृतः ।
अग्निकार्येषु च सदा सुमनोभिश्च देवताः ॥ ६

२९. पूज्यास्ते मत्कृते देवि ब्राह्मणाश्चैव सुव्रताः ।
एवं कालं प्रतीक्षस्व ममागमनकाङ्क्षिणी । ७

सीतायाः अनसूयायाश्च सम्भाषणम्—
अयोध्याकाण्डे अष्टादशोत्तरशततमः सर्गः ॥

३. यद्यप्येष भवेद्भर्ता ममार्ये वृत्तवर्जितः ।
अद्वैधमुपचर्तव्यः तथाप्येष मया भवेत् ॥ ८

४. किं पुनर्यो गुणश्लाघ्यः सानुक्रोशो जितेन्द्रियः ।
स्थिरानुरागो धर्मात्मा मातृवत्पितृवत्प्रियः ॥ ९

५. यां वृत्तिं वर्तते रामः कौसल्यायां महाबलः ।
तामेव नृपनारीणां अन्यासामपि वर्तते ॥ १०

६. सकृद्दृष्टास्वपि स्त्रीषु नृपेण नृपवत्सलः ।
मातृवत् वर्तते वीरो मानमुत्सृज्य धर्मवित् ॥ ११

९. पतिशुश्रूषणान्नार्यास्तपो नान्यद्विधीयते ॥ १२

## ७. भर्तृसौख्यम् ॥

सीतायाः रामं प्रति वचनानि—
अयोध्याकाण्डे सप्तविंशः सर्गः ॥

३. आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा ।
स्वानि पुण्यानि भुंजानाः स्वं स्वं भाग्यमुपासते ॥ १

४. भर्तुर्भाग्यं तु भार्यैका प्राप्नोति पुरुषर्षभ ।
अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥ २

५. न पिता नात्मजो नात्मा न माता न सखीजनः ।
इह प्रेत्य च नारीणां पतिरेको गतिस्सदा ॥ ३

८. प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा ।
सर्वावस्था गता भर्तुः पादच्छाया विशिष्यते ॥ ४

अयोध्याकाण्डे नवविंशः सर्गः ॥

७. पतिहीना तु या नारी न सा शक्ष्यति जीवितुम् ।
काममेवं विधं राम त्वया मम विदर्शितम् ॥ ५

१९. एवमस्मात्स्वकां नारीं सुवृत्तां हि पतिव्रतां ।
नाभिरोचयसे नेतुं त्वं मां केनेह हेतुना ॥ ६

२०. भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः ।
नेतुमर्हसि काकुत्स्थ समानसुखदुःखिनीं ॥ ७

वनप्रस्थानसमये सीतां प्रति कौसल्याया वचनानि
सीतायाः प्रतिवचनानि च—

अयोध्याकाण्डे नवत्रिंशः सर्गः ॥

२०. असत्यः सर्वलोकेऽस्मिन्सततं सत्कृताः प्रियैः ।
भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः ॥ ८

२१. एष स्वभावो नारीणां अनुभूय पुरा सुखम् ।
अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि ॥ ९

२२. असत्यशीला विकृता दुर्ग्राह्यहृदयाः सदा ।
युवत्यः पापसंकल्पाः क्षणमात्राद्विरागिणः ॥ १०

२३. न कुलं न कृतं विद्यां न दत्तं नापि सङ्ग्रहम् ।
स्त्रीणां गृह्णाति हृदयमनित्यहृदया हि ताः ॥ ११

२४. साध्वीनां हि स्थितानां तु शीले सत्ये श्रुते शमे ।
स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ॥ १२

२९. नातन्त्री वाद्यते वीणा नाचक्रो वर्तते रथः ।
नापतिः सुखमेधेत या स्यादपि शतात्मजा ॥ १३

३०. मितं ददाति हि पिता मितं माता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ १४

३१. साहमेवंगता श्रेष्ठा श्रुतधर्मपरावरा ।
आर्ये किमवमन्येहं स्त्रीणां भर्ता हि दैवतम् ॥ १५

सीतामुद्दिश्य कौसल्यासुमन्त्रसम्भाषणम्—
अयोध्याकाण्डे षष्टितमः सर्गः ॥

१०. बालेव रमते सीता बालचन्द्रनिभानना ।
रामा रामे ह्यधीनात्मा विजनेपि वने सती ॥ १६

१९. तद्गतं हृदयं ह्यस्यास्तदधीनं च जीवितं ।
अयोध्यापि भवेत्तस्या रामहीना तथा वनम् ॥ १७

२०. गजं वा वीक्ष्य सिंहं वा व्याघ्रं वा वनमाश्रिता ।
नाहारयति संत्रासं बाहू रामस्य संश्रिता ॥ १८

## ८. ज्येष्ठभ्राता ॥

अयोध्याकाण्डे चत्वारिंशः सर्गः ॥

६. व्यसनी वा समृद्धो वा गतिरेष तवानघ ।
एष लोके सतां धर्मो यज्ज्येष्ठवशगो भवेत् ॥ १

७. इदं हि वृत्तमुचितं कुलस्यास्य सनातनम् ।
दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु च ॥ २

९. रामं दशरथं विद्धि मां विद्धि जनकात्मजां ।
अयोध्यामटवीं विद्धि गच्छ तात यथासुखम् ॥ ३

## ९. कृतप्रतिज्ञा ॥

राज्याभिषेकानन्तरं ग्राम्यसुखेषु निमग्नं सुग्रीवं प्रति हनूमता कृतप्रतिज्ञापूर्तये प्रेरणं सुग्रीवस्य आलस्यं दृष्ट्वा रामस्य वचनानि —

किष्किन्धाकाण्डे नवविंशः सर्गः ॥

१०. यो हि मित्रेषु कालज्ञः सततं साधु वर्तते ॥ १

११. तस्य राज्यं च कीर्तिश्च प्रतापश्चाभिवर्धते ।
यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिप ॥ २

१२. समवेतानि सर्वाणि स राज्यं महदश्नुते ।
तद्भवान् वृत्तसम्पन्नः स्थितः पथि निरत्यये ॥ ३

१३. मित्रार्थमभिनीतार्थं यथावत्कर्तुमर्हति ।
संत्यज्य सर्वकर्माणि मित्रार्थे यस्तु वर्तते ॥ ४

१४. सम्भ्रमाद्धि कृतोत्साहः सोनर्थैर्नावरुध्यते ।
यस्तु कालव्यतीतेषु मित्रकार्येषु वर्तते ॥ ५

१५. स कृत्वा महतोप्यर्थान्नमित्रार्थेन युज्यते ।
यदिदं वीरकार्यं नो मित्रकार्यमरिन्दम ॥ ६

२१. अकर्तुरपि कार्यस्य भवान् कर्ता हरीश्वर ।
किं पुनः प्रतिकर्तुस्ते राज्येन च धनेन च ॥ ७

रामस्य वचनानि—

किष्किन्धाकाण्डे त्रिंशः सर्गः ॥

७१. अर्थिनामुपपन्नानां पूर्वं चाप्युपकारिणां ।
आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः ॥ ४

७२. शुभं वा यदि वा पापं यो हि वाक्यमुदीरितम् ।
सत्येन परिगृह्णाति स वीरः पुरुषोत्तमः ॥ ९

७३. कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये ।
तान् मृतानपि क्रव्यादाः कृतघ्नान्नोपभुंजते ॥ १०

## १०. मित्रकोपः ॥

श्रीरामस्य कोपमुद्दिश्य सुग्रीवस्य विचारः—

किष्किन्धाकाण्डे द्वात्रिंशः सर्गः ॥

६. न खल्वस्ति मम त्रासो लक्ष्मणान्नापि राघवात् ।
मित्रं त्वस्थानकुपितं जनयत्येव सम्भ्रमम् ॥ १

७. सर्वथा सुकरं मित्रं दुष्करं परिपालनम् ।
अनित्यत्वाच्च चित्तानां प्रीतिरल्पेपि भिद्यते ॥ २

## ११. परदारगमनम् ॥

स्ववशमानेतुं धर्षयितुं च कृतोद्यमं रावणं प्रति सीतायाः वचनानि —
सुन्दरकाण्डे एकविंशः सर्गः ॥

७. साधुधर्ममवेक्षस्व साधु साधुव्रतं चर ।
यथा तव तथान्येषां दारा रक्ष्या निशाचर ॥ १

८. आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम् ।
अतुष्टं स्वेषु दारेषु चपलं चलितेन्द्रियम् ॥ २

९. नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ।
इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ॥ ३

१०. तथाहि विपरीता ते बुद्धिराचारवर्जिता ।
वचो मिथ्या प्रणीतात्मा पथ्यमुक्तं विचक्षणैः ॥ ४

१४. अभिनन्दन्ति भूतानि विनाशे पापकर्मणः ।
एवं त्वां पापकर्माणं वक्ष्यन्ति निकृता जनाः ॥ ५

## १२. दायादाः ॥

सीतां दत्वा श्रीरामं शरणं व्रजेत्युक्तवति विभीषणे रावणस्य प्रतिवचनानि—

युद्धकाण्डे षोडशः सर्गः ॥

३. जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस ॥ १

४. ज्ञातयो ह्यवमन्यन्ते शूरं परिभवन्ति च ॥ २

५. नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः ।
प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहाः ॥ ३

७. घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः ॥ ४

८. उपायमेते वक्ष्यन्ति ग्रहणे नात्र संशयः ।
कृत्स्नाद्भयाज्ज्ञातिभयं सुकष्टं विदितं च नः ॥ ५

९. विद्यते गोषु सम्पन्नं विद्यते ब्राह्मणे दमः ।
विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ॥ ६

# विप्रकीर्णा विषयाः ॥

## १. धर्मसंरक्षणम् ॥

अयोध्याकाण्डे एकविंशः सर्गः ॥

४१. धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ।
धर्मसंश्रितमेतच्च पितुर्वचनमुत्तमम् ॥ १

## २. धर्मसंरक्षणं स्वार्थप्रतिपत्तिश्च ॥

श्रीरामलक्ष्मणयोः संवादः—

अयोध्याकाण्डे त्रिपंचाशः सर्गः ॥

२५. एको ह्यहमायोध्यां च पृथिवीं चापि लक्ष्मण ।
तरेयमिषुभिः क्रुद्धो ननु वीर्यमकारणम् ॥ १

२६. अधर्मभयभीतश्च परलोकस्य चानघ ।
तेन लक्ष्मण नाद्याहमात्मानमभिषेचये ॥ २

## ३. चरमकाललक्षणानि अशुभलक्षणानि च ॥

---

मातुलगृहात्[1] शीघ्रमेषितव्यमिति वसिष्ठाज्ञप्तेन भरतेन कारणमजानतापि दुर्लक्षणानि दृष्ट्वा किमपि दुःखहेतुरस्तीति शङ्कितम् —

अयोध्याकाण्डे एकसप्ततितमः सर्गः ।

३६. अशुभाशङ्कि हृदयं शीलं च पततीव मे ।
श्रुता नो यादृशाः पूर्वं नृपतीनां विनाशने ॥ १

३७. आकारांस्तानहं सर्वान् इह पश्यामि सारथे ।
संमार्जनविहीनानि परुषाण्युपलक्षये ॥ २

३८. असंयतकवाटानि श्रीविहीनानि सर्वशः ।
बलिकर्मविहीनानि धूपसंमोदनेन च ॥ ३

३९. अनाशितकुटुम्बानि प्रभाहीनजनानि च ।
अलक्ष्मीकानि पश्यामि कुटुम्बिभवनान्यहं ॥ ४

४०. अपेतमाल्यशोभान्यप्यसंमृष्टाजिराणि च ।
देवागाराणि शून्यानि न चाभान्ति यथापुरम् ॥ ५

४१. देवतार्चाः प्रविद्धाश्च यज्ञगोष्ठ्यास्तथाविधाः ।
माल्यापणेषु राजन्ते नाद्य पण्यानि वा तथा ॥ ६

४२. दृश्यन्ते वणिजोऽप्यद्य न यथापूर्वमत्र वै ।
ध्यानसंविग्नहृदया नष्टव्यापारयन्त्रिताः ॥

४३. देवायतनचैत्येषु दीनाः पक्षिगणास्तथा ।
मलिनं चाश्रुपूर्णाक्षं दीनं ध्यानपरं कृशम् ॥

४४. सस्त्रीपुंसं च पश्यामि जनमुत्कण्ठितं पुरे ॥

## ५. कर्तव्यानि कर्माणि ॥

राज्यभरणमवश्यं कर्तव्यमिति भरतस्य प्रार्थना श्रीरामनिकटे—
अयोध्याकाण्डे पंचोत्तरशततमः सर्गः ॥

८. यथा तु रोपितो वृक्षः पुरुषेण विवर्धितः ।
ह्रस्वकेन दुरारोहो रूढस्कन्धो महाद्रुमः ॥

९. स यथा पुष्पितो भूत्वा फलानि न विदर्शयेत् ।
स तां नानुभवेत्प्रीतिं यस्य हेतोः प्ररोपितः ॥

१०. एषोपमा महाबाहो तदर्थं वेत्तुमर्हसि ।
यदि त्वमस्मान्वृषभो भर्ता भृत्यान्न शाधि हि ॥

११. श्रेणयस्त्वां महाराज पश्यन्त्वग्र्याश्च सर्वशः ।
प्रतपन्तमिवादित्यं राज्ये स्थितमरिन्दमम् ॥

१५. नात्मनः कामकारोस्ति पुरुषोऽयमनीश्वरः ।
इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ॥ ५

१६. सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितं ॥ ६

१७. यथा फलानां पक्वानां नान्यत्र पतनाद्भयम् ।
एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥ ७

१८. यथागारं दृढस्थूणं जीर्णं भूत्वावसीदति ।
तथैव सीदन्ति नरा जरामृत्युवशंगताः ॥ ८

१९. अत्येति रजनी या तु सा न प्रतिनिवर्तते ।
यात्येव यमुना पूर्णा समुद्रमुदकाकुलम् ॥ ९

२०. अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामिह ।
आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः ॥ १०

२१. आत्मानमनुशोच त्वं किमन्यमनुशोचसि ।
आयुस्ते हीयते यस्य स्थितस्य च गतस्य च ॥ ११

२२. सहैव मृत्युर्व्रजति सहमृत्युर्निषीदति ।
गत्वा सुदीर्घमध्वानं सहमृत्युर्निवर्तते ॥ १२

२३. गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः ।

जरया पुरुषो जीर्णः किं हि कृत्वा प्रभावयेत् ॥ १३

२४. नन्दत्युदित आदित्ये नन्दत्यस्तमिते रवौ ।
आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम् ॥ १४

२५. हृष्यन्त्यृतु मुखं दृष्ट्वा नवं नवमिहागतम् ।
ऋतूनां परिवर्तेन प्राणिनां प्राणसंक्षयः ॥ १५

२६. यथा काष्ठं च काष्ठं च समेयातां महार्णवे ।
समेत्य च व्यपेयातां कालमासाद्य कंचन ॥ १६

२७. एवं भार्याश्च पुत्राश्च ज्ञातयश्च धनानि च ।
समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः ॥ १७

२८. नात्र कश्चिद्यथा भावं प्राणी समभिवर्तते ।
तेन तस्मिन्न सामर्थ्यं प्रेतस्यास्त्यनुशोचतः ॥ १८

२९. यथा हि सार्थं गच्छन्तं ब्रूयात्कश्चित्पथि स्थितः ।
अहमप्यागमिष्यामि पृष्ठतो भवतामिति ॥ १९

३०. एवं पूर्वैर्गतो मार्गः पितृपैतामहो ध्रुवः ।
तमापन्नः कथं शोचेद्यस्य नास्ति व्यतिक्रमः ॥ २०

३१. वयसः पतमानस्य स्रोतसो वाऽनिवर्तिनः ।
आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः ॥

## ६. नास्तिकमतविषयाः ॥

जाबालिमहर्षेः वचनानि —

अयोध्याकाण्डे अष्टोत्तरशततमः सर्गः ॥

३. कः कस्य पुरुषो बन्धुः किमाप्यं कस्य केनचित् ।
यदेको जायते जन्तुरेक एव विनश्यति ॥ १

४. तस्मान्माता पिता चेति राम सज्जेत यो नरः ।
उन्मत्त इव स ज्ञेयो नास्ति कश्चिद्धि कस्यचित् ॥ २

५. यथा ग्रामान्तरं गच्छन् नरः कश्चित्क्वचिद्वसेत् ।
उत्सृज्य च तमावासं प्रतिष्ठेतापरेऽहनि ॥ ३

६. एवमेव मनुष्याणां पिता माता गृहं वसु ।
आवासमात्रं काकुत्स्थ सज्जन्ते नात्र सज्जनाः ॥ ४

११. बीजमात्रं पिता जन्तोः शुक्लं रुधिरमेव च ।
संयुक्तमृतुमन्मात्रा पुरुषस्येह जन्म तत् ॥ ५

१२. गतः स नृपतिस्तत्र गन्तव्यं यत्र तेन वै ।
प्रवृत्तिरेषा मर्त्यानां त्वं तु मिथ्या विहन्यसे ॥ ६

१३. अर्थधर्मपरा ये ये तांस्ताञ्शोचामि नेतरान् ।
ते हि दुःखमिह प्राप्य विनाशं प्रेत्य भेजिरे ॥ ७

१४. अष्टकापितृदैवत्य मित्ययं प्रसृतो जनः ।
अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति ॥ ८

१५. यदि भुक्तमिहान्येन देहमन्यस्य गच्छति ।
दद्यात्प्रवसतः श्राद्ध न तत्पथ्यशनं भवेत् ॥ ९

१६. दानसंवनना ह्येते ग्रन्था मेधाविभिः कृताः ।
यजस्व देहि दीक्षस्व तपस्तप्यस्व संत्यज ॥ १०

१७. प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु ॥ ११

१८. सतां बुद्धिं पुरस्कृत्य सर्वलोकनिदर्शिनीम् ।
राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादितः ॥ १२

---

## ७. स्वार्थतत्परता ॥

जाबालेर्वचनानां प्रत्युत्तरं ददाति श्रीरामः—

अयोध्याकाण्डे नवोत्तरशततमः सर्गः ॥

३. निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः ।
मानं न लभते सत्सु भिन्नचारित्रदर्शनः ॥ १

४. कुलीनमकुलीनं वा वीरं पुरुषमानिनम् ।
चारित्रमेव व्याख्याति शुचिं वा यदि वाशुचिम् ॥ २

५. अनार्यस्त्वार्यसंकाशः शौचाद्धीनस्तथा शुचिः ।
लक्षण्यवदलक्षण्यो दुःशीलः शीलवानिव ॥ ३

६. अधर्मं धर्मवेषेण यदीमं लोकसंकरम् ।
अभिपत्स्ये शुभं हित्वा क्रियाविधिविवर्जितम् ॥ ४

७. कश्चेतयानः पुरुषः कार्याकार्यविचक्षणः ।
बहुमंस्यति मां लोके दुर्वृत्तं लोकदूषणम् ॥ ५

८. कस्य धास्याम्यहं वृत्तं केन वा स्वर्गमाप्नुयाम् ।
अनया वर्तमानो हि वृत्त्या हीनप्रतिज्ञया ॥ ६

९. कामवृत्तस्त्वयं लोकः कृत्स्नः समुपवर्तते ।
यद्वृत्ताः सन्ति राजानः तद्वृत्ताः सन्ति हि प्रजाः ॥ ७

१०. सत्यमेवानृशंसं च राजवृत्तं सनातनम् ।
तस्मात्सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः ॥ ८

११. ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे ।
सत्यवादी हि लोकेऽस्मिन्परमं गच्छति क्षयम् ॥ ९

१२. उद्विजन्ते यथा सर्पान्नरादनृतवादिनः ।
धर्मः सत्यं परो लोके मूलं स्वर्गस्य चोच्यते ॥ १०

१३. सत्यमेवेश्वरो लोके सत्यं पद्माश्रिता सदा ।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥ ११

१४. दत्तमिष्टं हुतं चैव तप्तानि च तपांसि च ।
वेदाः सत्यप्रतिष्ठानास्तस्मात्सत्यपरो भवेत् ॥ १२

१५. एकः पालयते लोकमेकः पालयते कुलम् ।
मज्जत्येको हि निरय एकः स्वर्गे महीयते ॥ १३

१६. सोऽहं पितुर्नियोगं तु किमर्थं नानुपालये ।
सत्यप्रतिश्रवः सत्यं सत्येन समयीकृतः ॥ १४

१७. नैव लोभान्न मोहाद्वा न ह्यज्ञानात्तमोन्वितः ।
सेतुं सत्यस्य भेत्स्यामि गुरोः सत्यप्रतिश्रवः ॥ १५

१८. असत्यसन्धस्य सतः चलस्यास्थिरचेतसः ।
नैव देवा न पितरः प्रतीच्छन्तीति नः श्रुतम् ॥ १६

१९. प्रत्यगात्ममिमं धर्मं सत्यं पश्याम्यहं स्वयम् ।
भारः सत्पुरुषाचीर्णस्तदर्थमभिमन्यते ॥ १७

२०. क्षात्रं धर्ममहं त्यक्ष्येह्यधर्मं धर्मसंहितम् ।
क्षुद्रैर्नृशंसैर्लुब्धैश्च सेवितं पापकर्मभिः ॥ १८

२१. कायेन कुरुते पापं मनसा सम्प्रधार्य च ।
अनृतं जिह्वया चाह त्रिविधं कर्म पातकम् ॥ १९

२२. भूमिः कीर्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि ।
स्वर्गस्थं चानु पश्यन्ति सत्यमेव भजेत तत् ॥ २०

२३. श्रेष्ठं ह्यनार्यमेव स्याद्यद्भवानवधार्यमाम् ।
आह युक्तिकरैर्वाक्यैरिदं भद्रं कुरुष्वह ॥ २१

२४. कथं ह्यहं प्रतिज्ञाय वनवासमिमं गुरौ ।
भरतस्य करिष्यामि वचो हित्वा गुरोर्वचः ॥ २२

३१. सत्यं च धर्मं च पराक्रमं च
भूतानुकम्पां प्रियवादितां च ।
द्विजातिदेवातिथिपूजनं च
पन्थानमाहुः त्रिदिवस्य सन्तः ॥ २३

३३. निन्दाम्यहं कर्म पितुः कृतं त-
द्यस्त्वामगृह्णाद्विषमस्थबुद्धिं ।
बुद्ध्यानयैवं विधयाचरन्तं
सुनास्तिकं धर्मपथादपेतम् ॥ २४

३६. धर्मे रताः सत्पुरुषैः समेता-
स्तेजस्विनो दानगुणप्रधानाः ।

अहिंसका वीतमलाश्च लोके
भवन्ति पूज्या मुनयः प्रधानाः ॥ २५

जाबालेः प्रत्युत्तरम् ॥

३८. न नास्तिकानां वचनं ब्रवीम्यहं
न नास्तिकोऽहं न च नास्ति किंचन ।
समीक्ष्य कालं पुनरास्तिकोऽभवं
भवेय काले पुनरेव नास्तिकः ॥ २६

३९. स चापि कालोऽयमुपागतः शनै-
र्यथा मया नास्तिकवागुदीरिता ।
निवर्तनार्थं तव राम कारणा-
त्प्रसादनार्थं च मयैतदीरितम् ॥ २७

## ८. नियतिः ॥

वालिवधानन्तरं श्रीरामः सुग्रीवं तारां अङ्गदं च सान्त्वयति—
किष्किन्धाकाण्डे पञ्चविंशः सर्गः ॥

४. नियतिः कारणं लोके नियतिः कर्मसाधनम् ।
नियतिः सर्वभूतानां नियोगेष्विह कारणम् ॥ १

५. न कर्ता कस्यचित्कश्चिन्नियोगे चापि नेश्वरः ।
स्वभावे वर्तते लोकस्तस्य कालः परायणम् ॥ २

६. न कालः कालमत्येति न कालः परिहीयते ।
स्वभावं च समासाद्य न कश्चिदतिवर्तते ॥ ३

७. न कालस्यास्ति बन्धुत्वं न हेतुर्न पराक्रमः ।
न मित्रज्ञातिसम्बन्धः कारणं नात्मनो वशः ॥ ४

८. किन्तु कालपरीणामो द्रष्टव्यः साधु पश्यता ।
धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः ॥ ५

## ९. कुसचिवाः ॥

अशोकवनिकां गत्वा सीतया सह सम्भाषितुं हनूमतः चिन्ता—
सुन्दरकाण्डे त्रिंशः सर्गः ॥

३७. भूताश्चार्था विनश्यन्ति देशकालविरोधिताः ॥ १

३८. विक्लवं दूतमासाद्य तमः सूर्योदये यथा ।
अर्थानर्थान्तरे बुद्धिः निश्चितापि न शोभते ॥ २

३९. घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥ ३

## १०. आत्महत्तिः परमसङ्कटनिमग्नता च ॥

रावणेन हिंसितवत्यास्सीतायाः प्रलापनानि —

सुन्दरकाण्डे पंचविंशः सर्गः ॥

१२. लोकप्रवादः सत्योऽयं पण्डितैः समुदाहृतः ।
अकाले दुर्लभो मृत्युः स्त्रिया वा पुरुषस्य वा ॥ १

२०. धिगस्तु खलु मानुष्यं धिगस्तु परवश्यतां ।
न शक्यं यत्परित्यक्तुं आत्मच्छन्देन जीवितम् ॥ २

सुन्दरकाण्डे षड्विंशः सर्गः ॥

४९. धन्याः खलु महात्मानो मुनयस्त्यक्तकिल्बिषाः ।
जितात्मानो महाभागा येषां न स्तः प्रियाप्रिये ॥ ३

५०. प्रियान्न सम्भवेद्दुःखमप्रियादधिकं भयम् ।
ताभ्यां हि ये वियुज्यन्ते नमस्तेषां महात्मनाम् ॥ ४

## ११. सौहृदम् ॥

विभीषणः रावणं रामाय सीता दीयतामित्युपदिशति —

युद्धकाण्डे षोडशः सर्गः ॥

११. यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः ।
न श्लेषमुपगच्छन्ति तथाऽनार्येषु सौहृदम् ॥ १

१२. यथा मधुकरस्तर्षाद्रसं विन्दन्न विद्यते ।
तथात्वमपि तत्रैव तथाऽनार्येषु सौहृदम् ॥ २

१३. यथापूर्वं गजःस्नात्वा गृह्य हस्तेन वै रजः ।
दूषयत्यात्मनो देहं तथाऽनार्येषु सौहृदम् ॥ ३

१४. यथा शरदि मेघानां सिंचतामपि गर्जताम् ।
न भवत्यम्बुसंक्लेदस्तथाऽनार्येषु सौहृदम् ॥ ४

२०. सुलभाः पुरुषा राजन् सततं प्रियवादिनः ॥ ५

२१. अप्रियस्य च पथ्यस्य वक्ता श्रोता तु दुर्लभः ।
बद्धं कालस्य पाशेन सर्वभूतापहारिणा ॥ ६

२७. निवार्यमाणस्य मया हितैषिणा
न रोचते ते वचनं निशाचर ।
परीतकाला हि गतायुषो नरा
हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ ७

---

## १२. साहसकर्माणि ॥

---

रावणं प्रति कुम्भकर्णस्य वचनानि —

युद्धकाण्डे त्रिषष्टितमः सर्गः ॥

४. प्रथमं वै महाराज कृत्यमेतदचिन्तितम् ।
केवलं वीर्यदर्पेण नानुबन्धो विचारितः ॥ १

५. यः पश्चात्पूर्वकार्याणि कुर्यादैश्वर्यमास्थितः ।
पूर्वं चोत्तरकार्याणि न स वेद नयानयौ ॥ २

६. देशकालविहीनानि कर्माणि विपरीतवत् ।
क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ३

७. त्रयाणां पञ्चधा योगं कर्मणां यः प्रपश्यति ।
सचिवैः समयं कृत्वा स सभ्ये वर्तते पथि ॥ ४

८. यथागमं च यो राजा समयं विचिकीर्षति ।
बुध्यते सचिवान्बुद्ध्या सुहृदश्चानुपश्यति ॥ ५

९. धर्ममर्थं च कामं च सर्वान्वा रक्षसां पते ।
भजेत पुरुषः काले त्रीणि द्वन्द्वानि वा पुनः ॥ ६

१०. त्रिषु चैतेषु यच्छ्रेष्ठं श्रुत्वा तन्नावबुध्यते ।
राजा वा राजमात्रो वा व्यर्थं तस्य बहुश्रुतम् ॥ ७

११. उपप्रदानं सान्त्वं वा भेदं काले च विक्रमम् ।
योगं च रक्षसां श्रेष्ठ तावुभौ च नयानयौ ॥ ८

१२. काले धर्मार्थकामान्यः संमन्त्र्य सचिवैः सह ।
निषेवतात्मवाल्लँोके न स व्यसनमाप्नुयात् ॥ ९

१३. हितानुबन्धमालोच्य कार्याकार्यमिहात्मनः ।
राजा सहार्थतत्त्वज्ञैः सचिवैः सहि जीवति ॥ १०

१४. अनभिज्ञाय शास्त्रार्थान् पुरुषाः पशुबुद्धयः ।
प्रागल्भ्याद्वक्तुमिच्छन्ति मन्त्रेष्वभ्यन्तरीकृताः ॥ ११

१५. अशास्त्रविदुषां तेषां न कार्यमहितं वचः ।
अर्थशास्त्रानभिज्ञानां विपुलां श्रियमिच्छताम् ॥ १२

१६. अहितं च हिताकारं धार्ष्ट्याज्जल्पन्ति ये नराः ।
अवेक्ष्य मन्त्रबाह्यास्ते कर्तव्याः कृत्यदूषणाः ॥ १३

१७. विनाशयन्तो भर्तारं सहिताः शत्रुभिः बुधैः ।
विपरीतानि कृत्यानि कारयन्तीह मन्त्रिणः ॥ १४

१८. तान् भर्ता मित्रसंकाशानमित्रान्मन्त्रनिर्णये ।
व्यवहारेण जानीयात्सचिवानुपसंहितान् ॥ १५

१९. चपलस्येह कृत्यानि सहसानुप्रधावतः ।
छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ॥ १६

२०. यो हि शत्रुमभिज्ञाय नात्मानमभिरक्षति ।
अवाप्नोति हि सोऽनर्थान् स्थानाच्च व्यवरोप्यते ॥१७

२१. यदुक्तमिह ते पूर्वं क्रियतामनुजेन च ।
तदेव नो हितं कार्यं यदिच्छसि च तत्कुरु ॥ १८

## १३. कर्मगतिः ॥

कुम्भकर्णं प्रति महोदरस्य वचनानि—
युद्धकाण्डे चतुष्षष्टितमः सर्गः ।

७. कर्म चैव हि सर्वेषां कारणानां प्रयोजकम् ।
श्रेयः पापीयसां चात्र फलं भवति कर्मणाम् ॥ १

८. निःश्रेयसफलावेव धर्मार्थावितरावपि ।
अधर्मानर्थयोः प्राप्तिः फलं च प्रत्यवायिकम् ॥ २

९. ऐहलौकिकपारत्रं कर्म पुंभिर्निषेव्यते ।
कर्माण्यपि तु कल्यानि लभते काममास्थितः ॥ ३

१०. तत्र क्लृप्तमिदं राज्ञा हृदि कार्यं मतं च नः ।
शत्रौ हि साहसं यत्स्यात्किमिवात्रापनीयते ॥ ४



## १४. वीरकृत्यानि ॥

रावणं प्रति कुम्भकर्णः—

युद्धकाण्डे पञ्चषष्टितमः सर्गः ॥

४. न मर्षयति चात्मानं सम्भावयति नात्मना ।
अदर्शयित्वा शूरास्तु कर्म कुर्वन्ति दुष्करम् ॥ १

५. विक्लवानामबुद्धीनां राज्ञा पण्डितमानिनाम् ।
शृण्वता सादितमिदं त्वद्विधानां महोदर ॥ २

## १५. धर्मानुरक्तः ॥

विभीषणं प्रति कुम्भकर्णवचनानि —

युद्धकाण्डे सप्तषष्टितमः सर्गः ॥

१४९. त्वमेको रक्षसां लोके सत्यधर्माभिरक्षिता ।
नास्ति धर्माभिरक्तस्य व्यसनं तु कदाचन ॥ १

## १६. गहना कर्मणो गतिः ॥

इन्द्रजितौ मायासीतां हतवति तद्दर्शनजनितसन्तापातिरेकेणातीववैक्लव्यं प्राप्तवन्तं श्रीरामं लक्ष्मणः सान्त्वयति प्रोत्साहयति च –

युद्धकाण्डे त्र्यशीतितमः सर्गः ॥

१५. भूतानां स्थावराणां च जङ्गमानां च दर्शनम् ।
यथास्ति न तथाधर्मः तेन नास्तीति मे मतिः ॥ १

१६. यथैव स्थावरं व्यक्तं जङ्गमञ्च तथाविधम् ।
नायमर्थस्तथायुक्तस्त्वद्विधो न विपद्यते ॥ २

१७. यद्यधर्मो भवेद्भूतो रावणो नरकं व्रजेत् ।
भवांश्च धर्मयुक्तो वै नैवं व्यसनमाप्नुयात् ॥ ३

१८. तस्य च व्यसनाभावाद्व्यसनं च गते त्वयि ।
धर्मो भवत्यधर्मश्च परस्परविरोधिनौ ॥ ४

१९. धर्मेणोपलभेद्धर्ममधर्मं चाप्यधर्मतः ।
यद्यधर्मेणयुज्येयुर्येष्वधर्मः प्रतिष्ठितः ॥ ५

२०. यदि धर्मेण युज्येरन्नाधर्मरुचयो जनाः ।
धर्मेण चरतां धर्मस्तथाचैषां फलं भवेत् ॥ ६

२१. यस्मादर्था विवर्धन्ते येष्वधर्मः प्रतिष्ठितः ।

क्लिश्यन्ते धर्मशीलाश्च तस्मादेतौ निरर्थकौ ॥ ७

२२. वध्यन्ते पापकर्माणो यद्यधर्मेण राघव ।
वधकर्महतोऽधर्मः स हतः कं वधिष्यति ॥ ८

२३. अथवा विहितेनायं हन्यते हन्ति वा परम् ।
विधिरालिप्यते तेन न स पापेन कर्मणा ॥ ९

२४. अदृष्टप्रतिकारेण त्वव्यक्तेनासता सता ।
कथं शक्यं परं प्राप्तुं धर्मेणारिविकर्शन ॥ १०

२५. यदि सत्स्यात्सतांमुख्य नासत्स्यात्तव किंचन ।
त्वया यदीदृशं प्राप्तं तस्मात्सन्नोपपद्यते ॥ ११

२६. अथवा दुर्बलः क्लीबो बलं धर्मोऽनुवर्तते ।
दुर्बलो हृतमर्यादो न सेव्य इति मे मतिः ॥ १२

२७. बलस्य यदिचेद्धर्मो गुणभूतः पराक्रमे ।
धर्ममुत्सृज्य वर्तस्व यथाधर्मे तथाबले ॥ १३

२८. अथचेत्सत्यवचनं धर्मः किल परंतप ।
अनृतस्त्वय्यकरुणः किं न बद्धस्त्वया पिता ॥ १४

२९. यदिधर्मो भवेद्भूतो अधर्मो वा परंतप ।

नस्म हत्वा मुनिं वज्री कुर्यादिज्यां शतक्रतुः ॥ १५

३०. अधर्मसंश्रितो धर्मो विनाशयति राघव ।
सर्वमेतद्यथा कामं काकुत्स्थ कुरुते नरः ॥ १६

३१. मम चेदं मतं तात धर्मोऽय मिति राघव ।
धर्ममूलं त्वया छिन्नं राज्यमुत्सृजता तदा ॥ १७

३२. अर्थेभ्यो हि विवृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः ।
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ १८

३३. अर्थेन हि वियुक्तस्य पुरुषस्याल्पतेजसः ।
व्युच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ १९

३४. सोऽयमर्थं परित्यज्य सुखकामः सुखैधितः ।
पापमारभते कर्तुं ततो दोषः प्रवर्तते ॥ २०

३५. यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः २१

३६. यस्यार्थाः स च विक्रान्तो यस्यार्थाः स च बुद्धिमान्
यस्यार्थाः स महाभागो यस्यार्थाः स महागुणः ॥ २२

३७. अर्थस्यैते परित्यागे दोषाः प्रव्याहृता मया ।

राज्यमुत्सृजता वीर येन बुद्धिस्त्वया कृता ॥ २३

३८. यस्यार्था धर्मकामार्थास्तस्य सर्वं प्रदक्षिणम् ।
अधनेनार्थकामेन नार्थः शक्यो विचिन्वता ॥ २४

३९. हर्षः कामश्च दर्पश्च धर्मः क्रोधः शमो दमः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥ २५

४०. येषां नश्यत्ययं लोकश्चरतां धर्मचारिणाम् ।
तेऽर्थास्त्वयि न दृश्यन्ते दुर्दिनेषु यथाग्रहाः ॥ २६

४१. त्वयि प्रव्राजिते वीर गुरोश्च वचनेस्थिते ।
रक्षसापहृता भार्या प्राणैः प्रियतरा तव ॥ २७

४२. तदद्यविपुलं वीर दुःखमिन्द्रजिता कृतम् ।
कर्मणाव्यपनेष्यामि तस्मादुत्तिष्ठ राघव ॥ २८

४३. उत्तिष्ठ नरशार्दूल दीर्घबाहो दृढव्रत ।
किमात्मानं महात्मानं आत्मानं नावबुध्यसे ॥ २९

## १७. गुणाः पूज्यस्थानम् ॥

इन्द्रजितो विभीषणस्य संवादः—

युद्धकाण्डे सप्ताशीतितमः सर्गः ॥

२०. गुणोऽयं प्रथमो नृणां तन्मे शीलमराक्षसम् ।
न रमे दारुणेनाहं न चाधर्मेण वै रमे ॥ १

२१. भ्रात्रा विषमशीलेन कथं भ्राता निरस्यते ।
धर्मात्प्रच्युतशीलं हि पुरुषं पापनिश्चयम् ॥ २

२२. त्यक्त्वा सुखमवाप्नोति हस्तादाशीविषं यथा ।
हिंसा परस्वहरणे परदाराभिमर्शनम् ॥ ३

२३. त्याज्यमाहुर्दुराचारं वेश्म प्रज्वलितं यथा ।
परस्वानां च हरणं परदाराभिमर्शनम् ॥ ४

२४. सुहृदामतिशङ्का च त्रयोदोषाः क्षयावहाः ।
महर्षीणां वधो घोरः सर्वदेवैश्च विग्रहः ॥ ५

२५. अभिमानश्च कोपश्च वैरित्वं प्रतिकूलता ।
एते दोषा मम भ्रातुः जीवितैश्वर्यनाशनाः ॥ ६

२६. गुणान्प्रच्छादयामासुः पर्वतानिव तोयदाः ।
दोषैरेतैः परित्यक्तो मया भ्राता पिता तव ॥ ७

१२. न ज्ञातित्वं न सौहार्दं न जातिस्तव दुर्मते ।
प्रमाणं न च सौदर्यं न धर्मो धर्मदूषण ॥ ८

१३. शोच्यस्त्वमसि दुर्बुद्धे निन्दनीयश्च साधुभिः ।
यस्त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ॥ ९

१५. गुणवान्वा परजनः स्वजनो निर्गुणोऽपि वा ।
निर्गुणः स्वजनः श्रेयान्यः परः पर एव सः ॥ १०

## १८. निरंकुशाभिरिन्द्रियचेष्टाभिर्नरेण-दुःखमेवानुभूयते ॥

रावणस्य मृतशरीरं दृष्ट्वा विलपन्त्या मण्डोदर्याः प्रलापनानि —

युद्धकाण्डे चतुर्दशोत्तरशततमः सर्गः ॥

१८. इन्द्रियाणि पुरा जित्वा जितं त्रिभुवनं त्वया ।
स्मरद्भिरिव तद्वैरमिन्द्रियैरेव निर्जितः ॥ १

२५. अवश्यमेव लभते फलं पापस्य कर्मणः ॥ २

२६. घोरं पर्यागते काले कर्ता नास्त्यत्र संशयः ।
शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते ॥ ३

## १९. यदि शत्रोः दूताः स्वामिनियोगात् अपत्यवधं कुर्वन्ति ते न शासनमर्हन्ति ॥

राक्षसीनां वधं कर्तुं कामं हनूमन्तमुपदिशति सीता निवारयति च —

युद्धकाण्डे षोडशोत्तरशततमः सर्गः ॥

३८. राजसंश्रयवश्यानां कुर्वन्तीनां पराज्ञया ।
विधेयानां च दासीनां कः कुप्येद्वानरोत्तम ॥ १

३९. भाग्यवैषम्ययोगेन पुरा दुश्चरितेन च ।
मयैतत्प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते ॥ २

४०. प्राप्तव्यं तु दशायोगान्मयैतदिति निश्चितम् ।
दासीनां रावणस्याहं मर्षयामीह दुर्बला ॥ ३

४३. न परः पापमादत्ते परेषां पापकर्मणाम् ।
समयो रक्षितव्यस्तु सन्तश्चारित्रभूषणाः ॥ ४

४४. पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम ।
कार्यं करुणमार्येण न कश्चिन्नापराध्यति ॥ ५

४५. लोकहिंसाविहाराणां रक्षसां कामरूपिणाम् ।
कुर्वतामपि पापानि नैव कार्यमशोभनम् ॥ ६

## २०. वैराणि मरणान्तानि ॥

रावणस्य संस्कारादीनि अपरकर्माणि कर्तुं शासति विभीषणं श्रीरामः—
युद्धकाण्डे चतुर्दशोत्तरशततमः सर्गः ॥

१०१. मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ॥ १

१०२. क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ २

## २१. स्त्रीणामावरणम् ॥

रावणवधानन्तरं श्रीरामसन्निधिं प्राप्तुं कृतोद्यमायाः सीतायाः
प्रवेशनं प्रति श्रीरामवचनानि—

युद्धकाण्डे सप्तदशोत्तरशततमः सर्गः ॥

२६. न गृहाणि न वस्त्राणि न प्राकारास्तिरस्क्रियाः ।
नेदृशा राजसत्कारा वृत्तमावरणं स्त्रियाः ॥ १

२७. व्यसनेषु न कृच्छ्रेषु न युद्धेषु स्वयंवरे ।
न क्रतौ न विवाहे च दर्शनं दुष्यति स्त्रियाः ॥ २

२८. सैषा युद्धगता चैव कृच्छ्रे च महति स्थिता ।
दर्शनेऽस्या न दोषः स्यान्मत्समीपे विशेषतः ॥ ३

## २२. स्त्रीणां परवेश्मवासः ॥

रावणस्य गृहेस्थितां सीतामुद्दिश्य श्रीरामस्य वचनानि—
युद्धकाण्डे अष्टादशोत्तरशततमः सर्गः ॥

१७. प्राप्तचारित्रसंदेहा मम प्रतिमुखे स्थिता ।
दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढम् ॥ १

१८. तद्गच्छ ह्यभ्यनुज्ञाता यथेष्टं जनकात्मजे ।
एता दशदिशो भद्रे कार्यमस्ति न मे त्वया ॥ २

१९. कः पुमान्हि कुले जातः स्त्रियं परगृहोषिताम् ।
तेजस्वी पुनरादद्यात्सुहृल्लेख्येन चेतसा ॥ ३

२०. रावणाङ्कपरिभ्रष्टां दृष्टां दुष्टेन चक्षुषा ।
कथं त्वां पुनरादद्यां कुलं व्यपदिशन्महत् ॥ ४

२१. तदर्थं निर्जिता मे त्वं यशः प्रत्याहृतं मया ।
नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामितः ॥ ५

# राजपुरुषाणामाचारा धर्माश्च ॥

## १. राज्ञः श्रैष्ठ्यम् ॥

अयोध्याकाण्डे एकोत्तरशततमः सर्गः ॥

४. राजानं मानुषं प्राहुर्देवत्वे सम्मतो मम ।
यस्य धर्मार्थसहितं वृत्तमाहुरमानुषम् ॥ १

## २. राजधर्मः ॥

दशरथस्य राज्यपरिपालनवर्णना —
बालकाण्डे सप्तमः सर्गः ॥

२०. प्रजानां पालनं कुर्वन्न धर्मं परिवर्जयन् ।
विश्रुतस्त्रिषु लोकेषु वदान्यः सत्यसङ्गरः ॥ १

२१. स तत्र पुरुषव्याघ्रः शशास पृथिवीमिमाम् ।
नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः ॥ २

२२. स शशास जगद्राजा दिवं देवपतिर्यथा ॥ ३

## ३. मन्त्रिणामुपदेष्टॄणां च गुणाः

दशरथराजस्य मन्त्रिणां पुरोहितानां च गुणवर्णनम् —

वालकाण्डे सप्तमः सर्गः ॥

१. मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः ॥ १

२. अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः ।
शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥ २

४. ऋत्विजौ द्वावभिमतौ तस्यास्तामृषिसत्तमौ ।
वसिष्ठो वामदेवश्च मन्त्रिणश्च तथापरे ॥ ३

५. विद्याविनीता ह्रीमन्तः कुशला नियतेन्द्रियाः ।
परस्परानुरक्ताश्च नीतिमन्तो बहुश्रुताः ॥ ४

६. श्रीमन्तश्च महात्मानः शास्त्रज्ञा दृढविक्रमाः ।
कीर्तिमन्तः प्रणिहिता यथावचनकारिणः ॥ ५

७. तेजःक्षमायशःप्राप्ताः स्मितपूर्वाभिभाषिणः ।
क्रोधात्कामार्थहेतोर्वा न ब्रूयुरनृतं वचः ॥ ६

८. तेषामविदितं किंचित्स्वेषु नास्ति परेषु वा ।
क्रियमाणं कृतं वापि चारेणापि चिकीर्षितम् ॥ ७

९. कुशला व्यवहारेषु सौहृदेषु परीक्षिताः ।
प्राप्तकालं तु ते दण्डं धारयेयुः सुतेष्वपि ॥ ८

१०. कोशसंग्रहणे युक्ता बलस्य च परिग्रहे ।
अहितं वापि पुरुषं न विहिंस्युरदूषकम् ॥ ९

११. वीराश्च नियतोत्साहा राजशास्त्रमनुव्रताः ।
शुचीनां रक्षितारश्च नित्यं विषयवासिनाम् ॥ १०

१२. ब्रह्मक्षत्रमहिंसन्तः ते कोशं समवर्धयन् ।
सुतीक्ष्णदण्डाः संप्रेक्ष्य पुरुषस्य बलाबलम् ॥ ११

१३. शुचीनामेकबुद्धीनां सर्वेषां संप्रजानताम् ।
नासीत्पुरे वा राष्ट्रे वा मृषावादी नरः क्वचित् ॥ १२

१४. कश्चिन्नदुष्टस्तत्रासीत्परदाररतो नरः ।
प्रशान्तं सर्वमेवासीद्राष्ट्रं पुरवरं च तत् ॥ १३

१५. सुवाससः सुवेषाश्च ते च सर्वे सुशीलिनः ।
हितार्थं च नरेन्द्रस्य जाग्रतो नयचक्षुषा ॥ १४

१६. गुरौ गुणगृहीताश्च प्रख्याताश्च पराक्रमे ।
विदेशेष्वपि विख्याताः सर्वतो बुद्धिनिश्चयात् ॥ १५

१५. सन्धिविग्रहतत्त्वज्ञाः प्रकृत्या सम्पदान्विताः ।
मन्त्रिसंवरणे युक्ताः श्लक्ष्णाः सूक्ष्मासु बुद्धिषु ॥ १६

---

## ४. दुष्टनिग्रहः ॥

---

ताटकाया वधं कर्तुं विश्वामित्रेण रामस्य प्रोत्साहनम्—
वालकाण्डे पञ्चविंशः सर्गः ॥

१६. न हि ते स्त्रीवधकृते घृणा कार्या नरोत्तम ॥ १

१७. चातुर्वर्ण्यहितार्थाय कर्तव्यं राजसूनुना ।
नृशंसमनृशंसं वा प्रजारक्षणकारणात् ॥ २

१८. पातकं वा स दोषं वा कर्तव्यं रक्षता सता ।
राज्यभारनियुक्तानामेष धर्मः सनातनः ॥ ३

---

## ५. सम्यक् परिपालितराज्यम् ॥

---

कौशिकं प्रति वसिष्ठस्य प्रश्नानि—
वालकाण्डे द्विपञ्चाशः सर्गः ॥

७. कच्चित्ते कुशलं राजन्कच्चिद्धर्मेण रञ्जयन् ।
प्रजाः पालयसे वीर राजवृत्तेन धार्मिक ॥ १

८. कच्चित्ते सम्भृता भृत्याः कच्चित्तिष्ठन्ति शासने ।
कच्चित्ते विजिताः सर्वे रिपवो रिपुसूदन ॥ २

९. कच्चिद्बलेषु कोशेषु मित्रेषु च परंतप ।
कुशलं ते नरव्याघ्र पुत्रपौत्रे तवानघे ॥ ३

~~~~~~~~~~

## ६. राज्यभरणश्रमः ॥

श्रीरामं यौवराज्याभिषेचनं कर्तुं कृतनिश्चयस्य दशरथस्य
प्रकृतीन् प्रति वचनानि —
अयोध्याकाण्डे द्वितीयः सर्गः ॥

७. पाण्डुरस्यातपत्रस्य छायायां जरितं मया ।
प्राप्य वर्षसहस्राणि बहून्यायूंषि जीवतः ॥ १

८. जीर्णस्यास्य शरीरस्य विश्रान्तिमभिरोचये ।
राजप्रभावजुष्टां हि दुर्वहामजितेन्द्रियैः ॥ २

९. परिश्रान्तोऽस्मि लोकस्य गुर्वीं धर्मधुरं वहन् ।
सोऽहं विश्रममिच्छामि रामं कृत्वा प्रजाहिते ॥ ३
~~~~~~~~~~

## ७. राजसेवा ॥

मया वनं गते भरतश्चाभिषिक्ते त्वया भरतं प्रति कथमाचरणीयमिति

सीतामुपदिशति श्रीरामः—

अयोध्याकाण्डे षड्विंशः सर्गः ।

२५. ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् ।
तस्मान्न ते गुणाः कथ्या भरतस्याग्रतो मम ॥ १

२६. नापि त्वं तेन भर्तव्या विशेषेण कदाचन ।
अनुकूलतया शक्यं समीपेऽतस्य वर्तितुम् ॥ २

३४. विप्रियं न च कर्तव्यं भरतस्य कदाचन ।
स हि राजा प्रभुश्चैव देशस्य च कुलस्य च ॥ ३

३५. आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः ।
राजानः सम्प्रसीदन्ति प्रकुप्यन्ति विपर्यये ॥ ४

३६. औरसानपि पुत्रान्हि त्यजन्त्यहितकारिणः ।
समर्थान्संप्रगृह्णन्ति परानपि नराधिपाः ॥ ५



## ८. अराजकदोषाः ॥

दशरथस्य मरणानन्तरं मन्त्रीणां वचनानि—
अयोध्याकाण्डे सप्तषष्टितमः सर्गः ॥

१०. नाराजके जनपदे बीजमुष्टिः प्रकीर्यते ।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥ १

११. अराजके धनं नास्ति नास्ति भार्याप्यराजके ।
इदमत्याहितं चान्यत्कुतः सत्यमराजके ॥ २

१२. नाराजके जनपदे यज्ञशीला द्विजातयः ।
सत्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः ॥ ३

१४. नाराजके जनपदे महायज्ञेषु यज्वनः ।
ब्राह्मणा वसुसम्पन्ना विसृजन्त्याप्तदक्षिणाः ॥ ४

१५. नाराजके जनपदे प्रहृष्टनटनर्तकाः ।
उत्सवाश्च समाजाश्च वर्धन्ते राष्ट्रवर्धनाः । ५

१६. नाराजके जनपदे सिद्धार्था व्यवहारिणः ।
कथाभिरनुरज्यन्ते कथाशीलाः कथाप्रियैः ॥ ६

१७. नाराजके जनपदे उद्यानानि समागताः ।
सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः ॥ ७

१८. नाराजके जनपदे वाहनैः शीघ्रगामिभिः ।
नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः ॥८

१९. नाराजके जनपदे धनवन्तः सुरक्षिताः ।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥ ९

२०. नाराजके जनपदे बद्धघण्टा विषाणिनः ।
अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः ॥ १०

२१. नाराजके जनपदे शरान्सन्ततमस्यताम् ।
श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥ ११

२२. नाराजके जनपदे वणिजो दूरगामिनः ।
गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥ १२

२३. नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनात्मानं यत्रसायंगृहो मुनिः ॥ १३

२४. नाराजके जनपदे योगक्षेमः प्रवर्तते ।
न चाप्यराजकं सेना शत्रून्विषहते युधि ॥ १४

२९. यथा ह्यनुदका नद्यो यथावाप्यतृणं वनम् ।
अगोपाला यथा गावः तथा राष्ट्रमराजकम् ॥ १५

३१. नाराजके जनपदे स्वकं भवति कस्यचित् ।

मत्स्या इव नरा नित्यं भक्षयन्ति परस्परम् ॥ १६

३२. ये हि सम्भिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः ।
तेऽपि भोगाय कल्पन्ते राजदण्डनिपीडिताः ॥ १७

३३. यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते ।
तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥ १८

३४. राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ १९

३६. अहो तम इवेदं स्यान्न प्रज्ञायेत किंचन ।
राजा चेन्न भवेल्लोके विभजन्साध्वसाधुनी ॥ २०

---

## ९. सुमन्त्रिणः ॥

भरतं प्रति श्रीरामस्य वचनानि—

अयोध्याकाण्डे शततमः सर्गः ॥

१६. मन्त्रो विजयमूलं हि राज्ञां भवति राघव ।
सुसंवृतो मन्त्रधरैरमात्यैः शास्त्रकोविदैः ॥ १

२४. एकोऽप्यमात्यो मेधावी शूरो दक्षो विचक्षणः ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥ २

## १०. राज्ञा परिहर्तव्या दोषाः ॥

भरतं राज्यभरणकार्याण्युपदिशति श्रीरामः—
अयोध्याकाण्डे शततमः सर्गः ॥

६५. नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् ।
अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिताम् ॥ १

६६. एकचिन्तनमर्थानामनर्थज्ञैश्च मन्त्रणम् ।
निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ॥ २

६७. मङ्गलस्याप्रयोगं च प्रत्युत्थानं च सर्वतः ।
कच्चित्त्वं वर्जयस्येतान्राजदोषांश्चतुर्दश ॥ ३

६८. दशपञ्चचतुर्वर्गान् सप्तवर्गं च तत्वतः ।
अष्टवर्गं त्रिवर्गं च विद्यास्तिस्रश्च राघव ॥ ४

७०. यात्रादण्डविधानं च द्वियोनी सन्धिविग्रहौ ।
कच्चिदेतान्महाप्राज्ञ यथावदनुमन्यसे ॥ ५

७४. यां वृत्तिं वर्तते तातो यां च नः प्रपितामहाः ।
तां वृत्तिं वर्तसे कच्चिद्या च सत्पथजा शुभा ॥ ६

७६. राजातु धर्मेण हि पालयित्वा
महामतिर्दण्डधरः प्रजानाम् ।

अवाप्य कृत्स्नां वसुधां यथाव-
दितश्च्युतः स्वर्गमुपैति विद्वान् ॥ ७

## ११. राज्ञः जागरूकता आलस्यभावं च ॥

श्रीरामं प्रति ऋषीणां वचनानि—

आरण्यकाण्डे षष्ठः सर्गः ॥

११. अधर्मस्तु महांस्तात भवेत्तस्य महीपतेः ।
यो हरेद्बलिषड्भागं न च रक्षति पुत्रवत् ॥ १

१२. युञ्जानः स्वानिव प्राणान्प्राणैरिष्टान्सुतानिव ।
नित्ययुक्तः सदा रक्षन्सर्वान्विषयवासिनः ॥ २

१३. प्राप्नोति शाश्वतीं राम कीर्तिं स बहुवार्षिकीम् ।
ब्रह्मणः स्थानमासाद्य तत्र चापि महीयते ॥ ३

१४. यत्करोति परं धर्मं मुनिर्मूलफलाशनः ।
तत्र राज्ञः चतुर्भागः प्रजाधर्मेण रक्षतः ॥ ४

१५. सोऽयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो महान् ।
त्वन्नाथोऽनाथवद्राम राक्षसैर्वध्यते भृशम् ॥ ५

जनस्थानस्थितान् राक्षसान्मांच अतीव हिंसितवतः श्रीरामस्य दण्ड-नमकुर्वतस्तवालस्यभावमतीव जुगुप्सितमिति रावणं प्रति शूर्पणखाया निन्दा—

आरण्यकाण्डे त्रयस्त्रिंशः सर्गः ॥

३. सक्तं ग्राम्येषु भोगेषु कामवृत्तं महीपतिम् ।
लुब्धं न बहुमन्यन्ते श्मशानाग्निमिव प्रजाः ॥ ६

४. स्वयं कार्याणि यः काले नानुतिष्ठति पार्थिवः ।
स तु वै सह राज्येन तैश्च कार्यैर्विनश्यति ॥ ७

५. अयुक्तचारं दुर्दर्शं अस्वाधीनं नराधिपम् ।
वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः ॥ ८

६. ये न रक्षन्ति विषयमस्वाधीना नराधिपाः ।
ते न वृद्ध्या प्रकाशन्ते गिरयः सागरे यथा ॥ ९

९. येषां चारश्च कोशश्च नयश्च जयतां वर ।
अस्वाधीना नरेन्द्राणां प्राकृतैस्ते जनैः समाः ॥ १०

१०. यस्मात्पश्यन्ति दूरस्थान्सर्वानर्थान्नराधिपाः ।
चारेण तस्मादुच्यन्ते राजानो दीर्घचक्षुषः ॥ ११

१५. तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम् ।
व्यसने सर्वभूतानि नाभिधावन्ति पार्थिवम् ॥ १२

१६. अतिमानिनमग्राह्यमात्मसम्भावितं परम् ।
क्रोधनं व्यसने हन्ति स्वजनोऽपि महीपतिम् ॥ १३

१७. नानुतिष्ठन्ति कार्याणि भयेषु न बिभेति च ।
क्षिप्रं राज्याच्च्युतो दीनस्तृणैस्तुल्यो भविष्यति ॥ १४

१८. शुष्कैः काष्ठैर्भवेत्कार्यं लोष्टैरपि च पांसुभिः ।
न तु स्थानात्परिभ्रष्टैः कार्यं स्याद्वसुधाधिपैः ॥ १५

१९. उपभुक्तं यथा वासः स्रजो वा मृदिता यथा ।
एवं राज्यात्परिभ्रष्टः समर्थोऽपि निरर्थकः ॥ १६

२०. अप्रमत्तश्च यो राजा सर्वज्ञो विजितेन्द्रियः ।
कृतज्ञो धर्मशीलश्च स राजा तिष्ठते चिरम् ॥ १७

२१. नयनाभ्यां प्रसुप्तोऽपि जागर्ति नयचक्षुषा ।
व्यक्तक्रोधप्रसादश्च स राजा पूज्यते जनैः ॥ १८

---

## १२. राजानः दिव्यशक्तिधराः ॥

सीतापहरणे सहायीभवितव्यमिति याचितवति मारीचे सः रावणं निवारितवान्
मारीचवाक्यानि अगणयित्वा मारीचं प्रति रावणस्य भर्त्सनम्—
आरण्यकाण्डे चत्वारिंशः सर्गः ॥

१२. पञ्चरूपाणि राजानो धारयन्त्यमितौजसः ।

अग्नेरिन्द्रस्य सोमस्य वरुणस्य यमस्य च ॥ १

१३. औष्ण्यं तथा विक्रमं च सौम्यं दण्डं प्रसन्नताम् ।
धारयन्ति महात्मानो राजानः क्षणदाचर ॥ २

१४. तस्मात्सर्वास्ववस्थासु मान्याः पूज्याश्च पार्थिवाः ३

## १३. दुर्मन्त्रिणां दोषाः ॥

मारीचरावणयोः संवादः—

आरण्यकाण्डे एकचत्वारिंशः सर्गः ॥

७. अमात्यैः कामवृत्तो हि राजा कापथमाश्रितः ।
निग्राह्यः सर्वथासद्भिर्न निग्राह्यो निगृह्यसे ॥ १

८. धर्ममर्थं च कामं च यशश्च जयतां वर ।
स्वामिप्रसादात्सचिवाः प्राप्नुवन्ति निशाचर ॥ २

१०. राजमूलो हि धर्मश्च जयश्च जयतां वर ।
तस्मात्सर्वास्ववस्थासु रक्षितव्या नराधिपाः ॥ ३

११. राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर ।
न चापि प्रतिकूलेन नाविनीतेन राक्षस ॥ ४

१२. ये तीक्ष्णमन्त्राः सचिवाः भज्यन्ते सह तेन वै ।
विषमे तुरगाः शीघ्रा मन्दसारथयो यथा ॥ ५

१३. बहवः साधवो लोके युक्ता धर्ममनुष्ठिताः ।
परेषामपराधेन विनष्टाः सपरिच्छदाः ॥ ६

१४. स्वामिना प्रतिकूलेन प्रजास्तीक्ष्णेन रावण ।
रक्ष्यमाणा न वर्धन्ते मेषा गोमायुना यथा ॥ ७

१५. अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः ।
येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ ८

१६. तदिदं काकतालीयं घोरमासादितं मया ।
अत्रैव शोचनीयस्त्वं ससैन्यो विनशिष्यसि ॥ ९

## १४. परदाराहरणस्य जुगुप्सितता ॥

रावणं प्रति जटायुषः सम्भाषणम् —

आरण्यकाण्डे पञ्चाशः सर्गः ॥

८. यथात्मनस्तथान्येषां दारा रक्ष्या विपश्चिता ।
धर्ममर्थं च कामं च शिष्टाः शास्त्रेष्वनागतम् ॥ १

९. व्यवस्यन्ति न राजानः पौलस्त्यकुलनन्दन ।

राजा धर्मश्च कामश्च द्रव्याणां चोत्तमो निधिः ॥ २

१०. धर्मः शुभं वा पापं वा राजमूलं प्रवर्तते ।
पापस्वभावश्चपलः कथं त्वं रक्षसां वर ॥ ३

११. ऐश्वर्यमभिसम्प्राप्तो विमानमिव दुष्कृतिः ।
कामं स्वभावो यो यस्य न शक्यः परिमार्जितुम् ॥ ४

१२. न हि दुष्टात्मनामार्य आवसत्यालये चिरम् ।
विषये वा पुरे वा ते यदा रामो महाबलः ॥ ५

## १५. अकारणशत्रुत्वम् ॥

वालिनः श्रीरामं प्रति परुषवाक्यानि —
किष्किन्धाकाण्डे सप्तदशः सर्गः ॥

१८. दमः शमः क्षमा धर्मो धृतिः सत्यं पराक्रमः ।
पार्थिवानां गुणा राजन्दण्डश्चाप्यपराधिषु ॥ १

१९. तान्गुणान्सम्प्रधार्याहमग्र्यं चाभिजनं तव ।
तारया प्रतिषिद्धोऽपि सुग्रीवेण समागतः ॥ २

२०. न मामन्येन संरब्धं प्रमत्तं योद्धुमर्हति ।
इति मे बुद्धिरुत्पन्ना बभूवादर्शने तव ॥ ३

२१. न त्वां विनिहतात्मानं धर्मध्वजमधार्मिकम् ।
जाने पापसमाचारं तृणैः कूपमिवावृतम् ॥ ४

२२. सतां वेषधरं पापं प्रच्छन्नमिव पावकम् ।
नाहं त्वामभिजानामि धर्मच्छद्माभिसंवृतम् ॥ ५

२३. विषये वा पुरे वा ते यदा नापकरोम्यहम् ।
न च त्वामवजाने च कस्मात्त्वं हंस्यकिल्बिषम् ॥ ६

२४. फलमूलाशनं नित्यं वानरं वनगोचरम् ।
मामिहाप्रतियुध्यन्तमन्येन च समागतम् ॥ ७

२५. लिङ्गमप्यस्ति ते राजन्दृश्यते धर्मसंहितम् ।
कः क्षत्रियकुले जातः श्रुतवान्नष्टसंशयः ॥ ८

२६. धर्मलिङ्गप्रतिच्छन्नः क्रूरं कर्म समाचरेत् ।
राम राजकुले जातः धर्मवानिति विश्रुतः ॥ ९

२७. अभव्यो भव्यरूपेण किमर्थं परिधावसि ।
साम दानं क्षमा धर्मः सत्यं धृतिपराक्रमौ ॥ १०

२८. पार्थिवानां गुणाराजन्दण्डश्चाप्यपराधिषु ।
वयं वनचरा राम मृगा मूलफलाशनाः ॥ ११

२९. एषा प्रकृतिरस्माकं पुरुषस्त्वं नरेश्वरः ।

भूमिर्हिरण्यं रूप्यं च विग्रहे कारणानि च ॥ १२

३०. तत्र कस्ते वने लोभो मदीयेषु फलेषु वा ।
नयश्च विनयश्चोभौ निग्रहानुग्रहावपि ॥ १३

३१. राजवृत्तिरसंकीर्णा न नृपाः कामवृत्तयः ।
त्वन्तु कामप्रधानश्च कोपनश्चानवस्थितः ॥ १४

३२. राजवृत्तैश्च सङ्कीर्णः शरासनपरायणः ।
न तेऽस्त्यपचितिर्धर्मे नार्थे बुद्धिरवस्थिता ॥ १५

३३. इन्द्रियैः कामवृत्तः सन्कृष्यसे मनुजेश्वर ।
हत्वा बाणेन काकुत्स्थ मामिहानपराधिनम् ॥ १६

३४. किं वक्ष्यसि सतां मध्ये कृत्वा कर्म जुगुप्सितम् ।
राजहा ब्रह्महा गोघ्नश्चोरः प्राणिवधे रतः ॥ १७

३५. नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ।
सूचकश्च कदर्यश्च मित्रघ्नो गुरुतल्पगः ॥ १८

३६. लोकं पापात्मनामेते गच्छन्त्यत्र न संशयः ।
अधार्यं चर्म मे सद्भी रोमाण्यस्थि च वर्जितम् ॥ १९

३७. अभक्ष्याणि च मांसानि त्वद्विधैर्धर्मचारिभिः ।
पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव ॥ २०

३८. शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः ।
चर्म चास्थि च मे राजन्न स्पृशन्ति मनीषिणः ॥ २१

३९. अभक्ष्याणि च मांसानि सोऽहं पञ्चनखो हतः ।
तारया वाक्यमुक्तोहं सत्यं सर्वज्ञया हितम् ॥ २२

४०. तदतिक्रम्य मोहेन कालस्य वशमागतः ।
त्वया नाथेन काकुत्स्थ न सनाथा वसुन्धरा ॥ २३

४१. प्रमदा शीलसम्पन्ना धूर्तेन पतिना यथा ।
शठो नैकृतिकः क्षुद्रो मिथ्याप्रश्रितमानसः ॥ २४

४२. कथं दशरथेन त्वं जातः पापो महात्मना ।
छिन्नचारित्रकक्ष्येण सतां धर्मातिवर्तिना ॥ २५

## १६. दुर्वृत्तदण्डनम् ॥

त्वं दण्ड्य एवेति वालिनं बोधयिष्यति श्रीरामः—
किष्किन्धाकाण्डे अष्टादशः सर्गः ॥

८. नयश्च विनयश्चोभौ यस्मिन्सत्यं च सुस्थितम् ।
विक्रमश्च यथादृष्टः स राजा देशकालवित् ॥ १

१०. तस्मिन्नृपतिशार्दूले भरते धर्मवत्सले ।

पालयत्यखिलां भूमिं कश्चरेद्धर्मनिग्रहम् ॥ २

१६. ते वयं धर्मविभ्रष्टं स्वधर्मे परमे स्थिताः ।
भरताज्ञां पुरस्कृत्य निगृह्णीमो यथाविधि ॥ ३

१७. अहं तु व्यक्ततामस्य वचनस्य ब्रवीमि ते ।
न हि मां केवलं रोषात्त्वं विगर्हितुमर्हसि ॥ ४

१८. तदेतत्कारणं पश्य यदर्थं त्वं मया हतः ।
भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम् ॥ ५

१९. अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः ।
रुमायां वर्तसे कामात्स्नुषायां पापकर्मकृत् ॥ ६

२०. तद्व्यतीतस्य ते धर्मात्कामवृत्तस्य वानर ।
भ्रातृभार्याविमर्शेऽस्मिन्दण्डोऽयं प्रतिपादितः ॥ ७

२१. न हि धर्मविरुद्धस्य लोकवृत्तादपेयुषः ।
दण्डादन्यत्र पश्यामि निग्रहं हरियूथप ॥ ८

२२. न हि ते मर्षये पापं क्षत्रियोऽहं कुलोद्भवः ।
औरसीं भगिनीं वापि भार्यां वाप्यनुजस्य यः ॥ ९

२३. प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः ।
भरतस्तु महीपालो वयं चादेशवर्तिनः ॥ १०

२४. त्वं तु धर्मादतिक्रान्तः कथं शक्यमुपेक्षितुम् ।
गुरुर्धर्मव्यतिक्रान्तं प्राज्ञो धर्मेण पालयन् ॥ ११

२५. भरतः कामवृत्तानां निग्रहे पर्यवस्थितः ।
वयं तु भरतादेशं विधिं कृत्वा हरीश्वर ॥ १२

२६. त्वद्विधान्भिन्नमर्यादान्नियन्तुं पर्यवस्थिताः ।
सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा तथा ॥ १३

२७. दारराज्यनिमित्तं च निश्रेयसि रतः स मे ।
प्रतिज्ञा च मया दत्ता तदा वानरसन्निधौ ॥ १४

२८. प्रतिज्ञा च कथं शक्या मद्विधेनानवेक्षितुम् ।
तदेभिः कारणैः सर्वैः महद्भिर्धर्मसंहितैः ॥ १५

२९. शासनं तव यद्युक्तं तद्भवाननुमन्यताम् ।
सर्वथा धर्म इत्येव द्रष्टव्यस्तव निग्रहः ॥ १६

३०. वयस्यस्यापि कर्तव्यं धर्ममेवानुपश्यतः ।
शक्यं त्वयापि तत्कार्यं धर्ममेवानुपश्यता ॥ १७

३१. श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ ।
गृहीतौ धर्मकुशलैः तत्तथा चरितं हरे ॥ १८

३२. राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।

निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ १९

३३. शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते ।
राजा त्वशासन्पापस्य तदवाप्नोति किल्बिषम् ॥ २०

३४. आर्येण मम मांधात्रा व्यसनं घोरमीप्सितम् ।
श्रमणेन कृते पापे यथा पापं त्वया कृतम् ॥ २१

३५. अन्यैरपि कृतं पापं प्रमत्तैर्वसुधाधिपैः ।
प्रायश्चित्तं च कुर्वन्ति तेन तच्छाम्यते रजः ॥ २२

३६. तदलं परितापेन धर्मतः परिकल्पितः ।
वधो वानरशार्दूल न वयं स्ववशे स्थिताः ॥ २३

३७. शृणु चाप्यपरं भूयः कारणं हरिपुङ्गव ।
यच्छ्रुत्वा हेतुमद्वीर न मन्युं कर्तुमर्हसि ॥ २४

३८. न मे तत्र मनस्तापो न मन्युर्हरियूथप ।
वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नराः ॥ २५

३९. प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून्मृगान् ।
प्रधावितान्वा वित्रस्तान्विस्रब्धांश्चापिनिष्ठितान् ॥ २६

४०. प्रमत्तानप्रमत्तान्वा नरा मांसार्थिनो भृशम् ।
विध्यन्ति विमुखांश्चापि न च दोषोऽत्र विद्यते ॥ २७

४१. यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः ।
तस्मात्त्वं निहतो युद्धे मया बाणेन वानर ॥ २८

४२. अयुध्यन्प्रतियुध्यन्वा यस्माच्छाखामृगो ह्यसि ।
दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च ॥ २९

४३. राजानो वानरश्रेष्ठ प्रदातारो न संशयः ।
तान्न हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत् ॥ ३०

४४. देवा मनुष्यरूपेण चरन्त्येते महीतले ।
त्वं तु धर्ममविज्ञाय केवलं रोषमास्थितः ॥ ३१

४५. प्रदूषयसि मां धर्मे पितृपैतामहे स्थितम् ॥ ३२

## १७. सुनृपतिः ॥

सुग्रीवं प्रति श्रीरामस्य वचनानि—
किष्किन्धाकाण्डे अष्टात्रिंशः सर्गः ॥

२०. धर्ममर्थं च कामं च काले यस्तु निषेवते ॥ १

२१. विभज्य सततं वीर स राजा हरिसत्तम ।
हित्वा धर्मं तथार्थं च कामं यस्तु निषेवते ॥ २

२२. स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ।
अमित्राणां वधे युक्तो मित्राणां सङ्ग्रहे रतः ॥ ३

## १८. मन्त्रोपदेशः ॥

लङ्कायां श्रीरामसैन्यागमने रावणस्य मन्त्रविचारः —
युद्धकाण्डे षष्ठः सर्गः ॥

६. तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः ।
त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ॥ १

७. तेषां तु समवेतानां गुणदोषौ वदाम्यहम् ।
मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्रनिर्णये ॥ २

८. मित्रैर्वापि समानार्थैर्बान्धवैर्वा समाहितैः ।
सहितो मन्त्रयित्वा यः कर्मारम्भान्प्रवर्तयेत् ॥ ३

९. दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ।
एकोऽर्थं विमृशेदेको धर्मे प्रकुरुते मनः ॥ ४

१०. एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ।
गुणदोषावनिश्चित्य त्यक्त्वा धर्मव्यपाश्रयम् ॥ ५

११. करिष्यामीति यः कार्यं उपेक्षेत्स नराधमः ।
यथेमे पुरुषा नित्यमुत्तमाधममध्यमाः ॥ ६

१२. एवं मन्त्रा हि विज्ञेया उत्तमाधममध्यमाः ।
ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा ॥ ७

१३. मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् ।
बह्व्योऽपिमतयो भूत्वा मन्त्रिणामर्थनिर्णये ॥ ८

१४. पुनर्यत्रैकतां प्राप्ताः स मन्त्रो मध्यमः स्मृतः ।
अन्योन्यमतिमास्थाय यत्र सम्प्रतिभाष्यते ॥ ९

१५. न चैकमत्ये श्रेयोस्ति मन्त्रः सोऽधम उच्यते ।
तस्मात्सुमन्त्रितं साधु भवन्तो मतिसत्तमाः ॥ १०

१६. कार्यं सम्प्रतिपद्यन्तामेतत्कृत्यं मतं मम ॥ ११



## १९. शत्रूणां बलाबलपरीक्षा ॥

रावणस्य सचिवानुपदिशति विभीषणः—

युद्धकाण्डे चतुर्दशः सर्गः ॥

२१. परस्य वीर्यं स्वबलं च बुध्वा
स्थानं क्षयं चैव तथैव वृद्धिम् ।
तथा स्वपक्षेऽप्यनुमृश्य बुद्ध्या
वदेत्क्षमं स्वामिहितं च मन्त्री ॥

## २०. चाराणां प्रयोजनम् ॥

युद्धकाण्डे एकोनत्रिंशः सर्गः ॥

२२. चारेण विदितः शत्रुः पण्डितैर्वसुधाधिपैः ।
युद्धे स्वल्पेन यत्नेन समासाद्य निरस्यते ॥ १

## २१. बुद्धियुक्तो नृपतिः ॥

रावणमुपदिशति माल्यवान्—
युद्धकाण्डे पञ्चत्रिंशः सर्गः ॥

७. विद्यास्वभिविनीतो यो राजा राजन्नयानुगः ॥ १

८. स शास्ति चिरमैश्वर्यमरींश्च कुरुते वशे ।
संदधानो हि कालेन निगृह्णंश्चारिभिः सह ॥ २

९. स्वपक्षवर्धनं कुर्वन्महदैश्वर्यमश्नुते ।
हीयमानेन कर्तव्यो राज्ञा संधिः समेन च ॥ ३

१०. न शत्रुमवमन्येत ज्यायान्कुर्वीत विग्रहम् ।
तन्मह्यं रोचते सन्धिः सह रामेण रावण ॥ ४

१२. असृजद्भगवान्पक्षौ द्वावेव हि पितामहः ॥ ५

१३. सुराणामसुराणां च धर्माधर्मौ तदाश्रयौ ॥ ६

१४. अधर्मो रक्षसां पक्षो ह्यसुराणां च रावण ॥ ७

१५. अधर्मो ग्रसते धर्मं ततस्तिष्यः प्रवर्तते ।
तत्त्वया चरता लोकान्धर्मो विनिहतो महान् ॥ ८

१६. अधर्मः प्रगृहीतश्च तेनास्मद्बलिनः परे ।
सप्रमादाद्विवृद्धस्तेऽधर्मोऽभिग्रसते हि नः ॥ ९

१७. विवर्धयति पक्षं च सुराणां सुरभावनः ।
विषयेषु प्रसक्तेन यत्किंचित्कारिणा त्वया ॥ १०



## २२. के न हन्तव्याः ॥



सर्वान् राक्षसान् ब्रह्मास्त्रेण निहन्तुं कृतोद्यमं निवारयति श्रीरामः—

अयुद्ध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम् ।
पलायन्तं प्रमत्तं वा न त्वं हन्तुमिहार्हसि ॥ १



## २३. प्रजानां क्षेमकरः नृपतिः ॥

रामाय भरतेन राज्यस्य पुनर्दानम्—
युद्धकाण्डे एकात्रिंशदुत्तरशततमः सर्गः ॥

४. वारिवेगेन महता भिन्नः सेतुरिव क्षरन् ।
दुर्बन्धनमिदं मन्ये राज्यच्छिद्रमसंवृतम् ॥

५. गतिं खर इवाश्वस्य हंसस्येव च वायसः ।
नान्वेतुमुत्सहे राम तव मार्गमरिन्दम ॥

६. यथा चारोपितो वृक्षो जातश्चान्तर्निवेशने ।
महांश्च सुदुरारोहो महास्कन्धप्रशाखवान् ॥

७. शीर्येत पुष्पितो भूत्वा न फलानि प्रदर्शयन् ।
तस्य नानुभवेदर्थं यस्य हेतोः स रोप्यते ॥

८. एषोपमा महाबाहो त्वदर्थं वेत्तुमर्हसि ।
यद्यस्मान्मनुजेन्द्र त्वं भक्तान्भृत्यान्न शाधिहि ॥

९. जगदद्याभिषिक्तं त्वामनुपश्यन्तु सर्वतः ।
प्रतपन्तमिवादित्यं मध्याह्ने दीप्ततेजसम् ॥

१०. तूर्यसंघातनिर्घोषैः काञ्चीनूपुरनिस्वनैः ।
मधुरैर्गीतशब्दैश्च प्रतिबुध्यस्व राघव ॥

## USEFUL SCHOOL SERIES.

| | | | |
|---|---|---|---|
| पञ्चतन्त्रसंग्रहः—A thorough reconstructed abridgement of the original | 1 | 0 | 0 |
| श्रीरामोदन्तम्—Text in bold types with explanatory foot-notes and free English Translation | 0 | 5 | 0 |
| श्रीकृष्णविलासकाव्यम् (सव्याख्यानम्)— A very popular Text book for beginners in Kavya study | 0 | 10 | 0 |
| रघुवंशम्—Text (cantos 1—3) | 0 | 3 | 0 |
| Do. With English Translation | 0 | 6 | 0 |
| नैषधकाव्यरत्नम्— मल्लिनाथसूरिविरचित जीवातुसमाख्य-व्याख्यासहितम् 1—6 सर्गाः Third Revised Edition with a critical Introduction, Foreword and Foot-notes | 1 | 12 | 0 |
| Do. Library Edition | 2 | 8 | 0 |
| Do. 7—12 सर्गाः | 1 | 12 | 0 |
| Do. Library Edition | 2 | 8 | 0 |
| प्रश्नमार्गः (टिप्पण्या परिष्कृत:) | 3 | 0 | 0 |
| Do. Library Edition | 4 | 0 | 0 |
| श्यामलादण्डकम्—श्यामलानवरत्नमालिका च | 0 | 1 | 6 |
| Do. With Tamil Translation | 0 | 3 | 0 |
| यजुःसन्ध्यावन्दनम्—समिदाधानसहितम् | 0 | 2 | 0 |
| नित्याह्निकम्—The daily rites of every Brahmin | 0 | 8 | 0 |
| Do. English Translation | 0 | 8 | 0 |
| देवीमाहात्म्यम्—According to South Indian Readings | 0 | 9 | 0 |
| Do. Glazed Edition | 0 | 12 | 0 |

ॐ

# ॥ सुभाषितमञ्जरी ॥

# A POETICAL ANTHOLOGY.

## ॥ श्रीरामोदन्तश्च ॥

BY

**S. VENKATARAMA SASTRI,**

*Senior Sanskrit Pandit,*

**TOWN HIGH SCHOOL, KUMBAKONAM.**



SECOND EDITION-3000 COPIES.

PUBLISHED BY

**C. S. DIKSHITAR & Co.,**

News-agents and Book-sellers,

KUMBAKONAM.



**Printed at the**

**SRI VIDYA PRESS,**

**Kumbakonam.**

Price As 6.] 1929. [Postage Extra.

॥ ओम् ॥

# ॥ सुभाषितमञ्जरी ॥

# A POETICAL ANTHOLOGY.

## ॥ श्रीरामोदन्तश्च ॥


BY

**S. VENKATARAMA SASTRI,**

*Senior Sanskrit Pandit,*

**TOWN HIGH SCHOOL, KUMBAKONAM.**



SECOND EDITION-3000 COPIES.





PUBLISHED BY

**C. S. DIKSHITAR & Co.,**

News-agents and Book-sellers,

KUMBAKONAM.





**Printed at the**

**SRI VIDYA PRESS,**

**Kumbakonam.**

Price As 8]     1929.     [Postage Extra.

॥ ओम् ॥

# सुभाषितमञ्जरी ॥



## स्तुतिशतकम्

### १. सुभाषितम् ।

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती ।
तत्रापि मधुरं काव्यं तस्मादपि सुभाषितम् ॥ १ ॥

संसारकटुवृक्षस्य द्वे फले ह्यमृतोपमे ।
सुभाषितरसास्वादः संगतिः सुजनैः सह ॥ २ ॥

पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् ।
मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥ ३ ॥

पशुर्वेत्ति शिशुर्वेत्ति वेत्ति गानरसं फणी ।
सुभाषितस्य माधुर्यं शंकरो वेत्ति वा न वा ॥ ४ ॥

द्राक्षा म्लानमुखी जाता शर्करा चाश्मतां गता ।
सुभाषितरसस्याग्रे सुधा भीता दिवं गता ॥ ५ ॥

## २. काव्यम् ।

कान्पृच्छामः सुराः सर्वे निवसामो वयं भुवि ।
किं वा काव्यरसः स्वादुः किं वा स्वादुः सुधारसः ॥६॥

निरवद्यानि काव्यानि यद्यनार्यस्य का क्षतिः ।
भिक्षुणा कक्षनिक्षिप्तः किमिक्षुर्नीरसो भवेत् ॥ ७ ॥

कविः करोति काव्यानि लालयत्युत्तमो जनः ।
तरुः प्रसूते पुष्पाणि वायुर्वहति सौरभम् ॥ ८ ॥

कविः करोति काव्यानि स्वादु जानन्ति पण्डिताः ।
सुन्दरीणां हि सौन्दर्यं पतिर्जानाति नो पिता ॥ ९ ॥

तत्त्वं किमपि काव्यानां जानाति विरलो जनः ।
मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥ १० ॥

---

## ३. विद्या ।

गतेऽपि वयसि ग्राह्या विद्या सर्वात्मना बुधैः ।
यद्यपिस्यान्न फलदा सुलभा सान्यजन्मनि ॥ ११ ॥

विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥ १२ ॥

नास्ति विद्यासमो बन्धुर्नास्ति विद्यासमः सुहृत् ।
नास्ति विद्यासमं वित्तं नास्ति विद्यासमं सुखम् ॥ १३ ॥

सर्वद्रव्येषु विद्यां वै द्रव्यमाहुरनुत्तमम् ।
अहार्यत्वादनर्घत्वादक्षयत्वाच्च सर्वदा ॥ १४ ॥

हर्तुर्न गोचरं याति दत्तं भवति विस्तृतम् ।
भ्रातृभिर्भाज्यते नैव विद्यारत्नं महाधनम् ॥ १५ ॥

---

## ४. विद्वान् ।

स्वगृहे पूज्यते मूर्खः स्वग्रामे पूज्यते प्रभुः ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ १६ ॥

यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि ।
निरस्तपादपे देशे ह्येरण्डोऽपि द्रुमायते ॥ १७ ॥

किंकुलेन विशालेन विद्याहीनस्य देहिनः ।
अकुलीनोऽपि विद्यावान्देवैरपि हि पूज्यते ॥ १८ ॥

साक्षरं पुरुषं दृष्ट्वा यो नरो नाभिमन्यते ।
बलीवर्दसमो लोके खुरशृङ्गविवर्जितः ॥ १९ ॥

अक्षराणि परीक्ष्यन्तामम्बराडम्बरेण किम् ।
शंभुरम्बरहीनोऽपि सर्वज्ञः किं न जायते ॥ २० ॥

## ५. साधवः ।

निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
नहि संहरते ज्योत्स्नां चन्द्रश्चण्डालवेश्मनि ॥ २१ ॥

नारिकेलसमाकारा दृश्यन्ते भुवि सज्जनाः ।
अन्ये बदरिकाकारा बहिरेव मनोहराः ॥ २२ ॥

श्लोकः श्लोकत्वमायाति वर्ण्यन्ते यत्र साधवः
असन्तो यत्र वर्ण्यन्ते लकारस्तत्र लुप्यते ॥ २३ ॥

यथा चित्तं तथा वाचा यथा वाचा तथा क्रिया ।
चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ २४ ॥

स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् ।
न त्यजन्ति रुतं मञ्जु काकसंसर्गतः पिकाः ॥ २५ ॥

---

## ६. सन्मार्गः ।

अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥ २६ ॥

प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः ।
किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥ २७ ॥

न द्विषन्ति न याचन्ते परनिन्दां न कुर्वते ।
अनाहूता न चायान्ति तेनाश्मानोऽपि देवताः ॥ २८ ॥

कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि ।
अकार्यं नैव कर्तव्यं प्राणैः कण्ठगतैरपि ॥ २९ ॥

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ ३० ॥

---

## ७. सत्संगतिः

सद्भिरेव सहासीत सद्भिः कुर्वीत संगतिम् ।
सद्भिर्विवादं मैत्रीं च नासद्भिः किञ्चिदाचरेत् ॥ ३१ ॥

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ ३२ ॥

काचः काञ्चनसंसर्गाद्धत्ते मारकतीं द्युतिम् ।
तथा सत्सहवासेन मूर्खो याति प्रवीणताम् ॥ ३३ ॥

हीयते हि मतिस्तात हीनैः सह समागमात् ।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥ ३४ ॥

कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ ३५ ॥

---

## ८. धर्मः ।

अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं संनिहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥ ३६ ॥

शर्वरीदीपकश्चन्द्रः प्रभातोदीपको रविः ।
त्रैलोक्यदीपको धर्मः सुपुत्रः कुलदीपकः ॥ ३७ ॥

भार्या मित्रं गृहस्थानां विद्या मित्रं प्रवासिनाम् ।
रोगिणामौषधं मित्रं धर्मो मित्रं शरीरिणाम् ॥ ३८ ॥

अर्था गृहे निवर्तन्ते श्मशाने मित्रबान्धवाः ।
सुकृतं दुष्कृतं चैव गच्छन्तमनुगच्छति ॥ ३९ ॥

तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ ४० ॥

---

## ९. अर्थः ।

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः

अर्थवानेव लोकेऽस्मिन् पूज्यते मित्रबान्धवैः ।
अर्थहीनस्तु पुरुषो जीवन्नपि मृतोपमः ॥ ४२ ॥

अन्त्यजोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् ।
अपि ब्रह्मकुले जातो निर्धनः परिभूयते ॥ ४३ ॥

पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते ।
वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य हि ॥ ४४ ॥

धनमर्जय काकुत्स्थ धनमूलमिदं जगत् ।
अन्तरं नैव पश्यामि निर्धनस्य मृतस्यच ॥ ४५ ॥

## १०. सत्यम् ।

सत्यान्नास्ति परो धर्मः सत्यान्नास्ति परं तपः ।
सत्यान्नास्ति परो योगः सत्यान्नास्ति परं पदम् ॥ ४६॥

नास्ति सत्यसमो बन्धुः नास्ति सत्यसमः सुहृत् ॥
नास्ति सत्यसमः सूनुः नास्ति सत्यसमं सुखम् ॥४७॥

सत्येन धार्यते पृथ्वी सत्येन तपते रविः ।
सत्येन वायवो वान्ति सत्ये सर्वं प्रतिष्ठितम् ॥ ४८ ॥

अश्वमेधसहस्रं च सत्यंच तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ४९ ॥

गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः ।
अलुब्धैर्दानशूरैश्च सप्तभिर्धार्यते मही ॥ ५० ॥

## ११. बुद्धिः ।

बुद्धिमान्बलवान् लोके निर्बुद्धेस्तु कुतो बलम् ।
वने सिंहो मदोन्मत्तः शशकेन निपातितः ॥ ५१ ॥

यत्र नास्ति गतिर्वायोः रश्मीनां च विवस्वतः ।
तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां नृणाम् ॥ ५२ ॥

आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति ते ।
महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ ५३ ॥

अनारम्भो हि कार्याणां प्रथमं बुद्धिलक्षणम् ।
आरब्धस्यान्तगामित्वं द्वितीयं बुद्धिलक्षणम् ॥ ५४ ॥

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमता मुक्ता हन्ति राष्ट्रं सराजकम् ॥ ५५ ॥

---

## १२. परोपकारः ।

परोपकारः कर्तव्यः प्राणैरपि धनैरपि ।
परोपकारजं पुण्यं न स्यात्क्रतुशतैरपि ॥ ५६ ॥

रविश्चन्द्रो घना वृक्षा नद्यो गावश्च सज्जनाः ।
एते परोपकाराय विधिना विनिर्मिताः ॥ ५७ ॥

आत्मार्थं जीवलोकेऽस्मिन्को न जीवति मानवः ।
परं परोपकारार्थं यो जीवति स जीवति ॥ ५८ ॥

परोपकारकैवल्ये तोलयित्वा जनार्दनः ।
उपकारं गुरुं ज्ञात्वा ह्यवतारान्दशाग्रहीत् ॥ ५९ ॥

श्रूयतां धर्मसर्वस्वं यदुक्तं शास्त्रकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ ६० ॥

## १३. जीवितम् ।

यस्मिञ्जीवति जीवन्ति बहवः स तु जीवति ।
बकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ॥६१॥

स जीवति यशो यस्य कीर्तिर्यस्य स जीवति ।
अयशोऽकीर्तिसंयुक्तो जीवन्नपि न जीवति ॥ ६२ ॥

वाणी रसवती यस्य भार्या यस्य च पुत्रिणी ।
लक्ष्मीर्दानवती यस्य सफलं तस्य जीवितम् ॥ ६३ ॥

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।
अनुकम्प्योऽनुकम्प्यश्च सफलं तस्य जीवितम् ॥ ६४ ॥

स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्तिनि संसारे मृतः को वा न जायते ॥ ६५ ॥

## १४. सुपुत्रः।

वरमेको गुणी पुत्रो न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च ॥ ६६ ॥

एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं तद्वनं सर्वं सुपुत्रेण कुलं तथा ॥ ६७ ॥

एकेनापि सुपुत्रेण विद्यायुक्तेन भासते ।
कुलं पुरुषसिंहेन चन्द्रेणेव विभावरी ॥ ६८ ॥

एकेनाऽपि सुपुत्रेण सिंही स्वपिति निर्भया ।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥ ६९ ॥

किंजातै बहुभिः पुत्रैः शोकसन्तापकारकैः ।
वरमेकः कुलालम्बी येन विश्रूयते पिता ॥ ७० ॥

---

## १५. दानम्।

यद्ददाति विशिष्टेभ्यो यच्चाश्नाति दिनेदिने ।
तत्तस्य वित्तं मन्येऽहं शेषं कस्यापि रक्षति ॥ ७१ ॥

त्याग एको गुणः श्लाघ्यः किमन्यैर्गुणकोटिभिः
त्यागाज्जगति पूज्यन्ते पशुपाषाणपादपाः ॥ ७२ ॥

भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम् ।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ॥ ७३ ॥

गौरवं प्राप्यते दानान्न तु वित्तस्य सञ्चयात् ।
स्थितिरुच्चैः पयोदानां पयोधीनामधःस्थितिः ॥७४॥

तावत्प्रीतिर्भवेल्लोके यावद्दानं प्रदीयते ।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ ७५ ॥

---

## १६. दाता ।

शतेषु जायते शूरः सहस्रेषु च पण्डितः ।
वक्ता दशसहस्रेषु दाता भवति वा न वा ॥ ७६ ॥

दाता नीचोऽपि सेव्यः स्याददाता न महानपि ।
जलार्थी वारिधिं त्यक्त्वा पश्य कूपं निषेवते ॥ ७७ ॥

दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ।
अदाता तु धनत्यागी धनं त्यक्त्वा हि गच्छति ॥७८॥

याचितो यः प्रहृष्येत दत्वा च प्रीतिमान्भवेत् ।
तं दृष्ट्वाप्यथवा श्रुत्वा नरः स्वर्गमवाप्नुयात् ॥ ७९ ॥

कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः ।
ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ ८० ॥

---

## १७. धनवान्।

धनवान्बलवाँल्लोके सर्वः सर्वत्र सर्वदा ।
प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ॥ ८१ ॥

वयोवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः ।
सर्वे ते धनवृद्धानां द्वारि तिष्ठन्ति किंकराः ॥ ८२ ॥

पतन्ति खड्गधारासु विशन्ति मकरालयम् ।
किं न कुर्वन्ति धनिनां कष्टमर्थार्थिनो नराः ॥ ८३ ॥

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनो नरैः ॥ ८४ ॥

पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते ।
वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य हि ॥ ८५ ॥

---

## १८. संतोषः।

असंतोषपरा मूढाः संतोषं यान्ति पण्डिताः ।
असंतोषस्य नास्त्यन्तः संतोषः परमं सुखम् ॥ ८६ ॥

संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ ८७ ॥

अकृत्वा परसंतापमगत्वा खलनम्रताम् ।
अनुत्सृज्य सतांमार्गं यत्स्वल्पमपि तद्बहु ॥ ८८ ॥

यस्ते गर्भगतस्यापि वृत्तिं कल्पितवान्प्रभुः ।
शेषवृत्तिविधानाय स किं सुप्तोऽथवा मृतः ॥ ८९ ॥

अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः ।
सदासंतुष्टमनसः सर्वाः सुखमया दिशः ॥ ९० ॥

---

## १९. उद्यमः ।

उद्यमेनैव कार्याणि सिद्ध्यन्ति न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति वदने मृगाः ॥ ९१ ॥

आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः ।
नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥ ९२ ॥

न दैवमपि संचिन्त्य त्यजेदुद्योगमात्मनः ।
अनुद्योगेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥ ९३ ॥

विहाय पौरुषं यो हि दैवमेवावलम्बते ।
प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥ ९४ ॥

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥ ९५ ॥

## २०. महाकविः ।

ते धन्यास्ते महात्मानः तेषां लोके स्थिरं यशः ।
यैर्निबद्धानि काव्यानि ये च काव्येषु कीर्तिताः ॥९६॥

सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे ।
उत्पादका न बहवः कवयः शरभा इव ॥ ९७ ॥

सुकवेः शब्दसौभाग्यं सुकुविर्वेत्ति नापरः ।
मणिकारो विजानाति मणीनाम् सुविचित्रताम् ॥९८॥

कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः ।
न ह्यकूपारवत्कूपा वर्धन्ते विधुकान्तिभिः ॥ ९९ ॥

लक्ष्मीदाता गुणग्राही स्वामी पुण्येन लभ्यते ।
अनुकूलः शुचिर्दक्षः कविर्विद्वान्सुदुर्लभः ॥ १०० ॥

इति स्तुतिशतकम् ॥



॥ श्रीः ॥

# निन्दाशतकम् ॥



## १. दुर्जनः ।

दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ १ ॥

सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः ।
सर्पो दशति कालेन दुर्जनस्तु पदे पदे ॥ २ ॥

वृश्चिकानां भुजंगानां दुर्जनानां च वेधसा ।
विभज्य नियतं न्यस्तं विषं पुच्छे मुखे हृदि ॥ ३ ॥

दुर्जनः प्रियवादी स्यान्नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम् ॥ ४ ॥

पादपानां भयं वातः पद्मानां शिशिरो भयम् ।
पर्वतानां भयं वज्रः साधूनां दुर्जनो भयम् ॥ ५ ॥

---

## २. खलः ।

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ ६ ॥

अहो खलभुजंगस्य विपरीतो वधक्रमः ।
अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते ॥ ७ ॥

खलः करोति दुर्वृत्तं नूनं फलति साधुषु ।
दशाननोऽहरत्सीतां बंधनं तु महोदधेः ॥ ८ ॥

सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः ।
सर्पः शाम्यति मन्त्रेण खलस्तु न कथंचन ॥ ९ ॥

सर्पाणां च खलानां च परप्राणापहारिणाम् ।
अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत् ॥ १० ॥

---

## ३. मूर्खः ।

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किंकरिष्यति ॥ ११ ॥

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।
पयःपानं भुजंगानां केवलं विषवर्धनम् ॥ १२ ॥

रूपयौवनसंपन्ना विशालकुलसंभवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ १३ ॥

अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ १४ ॥

यस्य नास्ति विवेकस्तु केवलं यो बहुश्रुतः ।
न स जानाति शास्त्रार्थान्दर्वी पाकरसानिव ॥ १५ ॥

---

## ४. मौनम् ।

आत्मनो मुखदोषेण बध्यन्ते शुकशारिकाः ।
बकास्तु नैव बध्यन्ते मौनं सर्वार्थसाधनम् ॥ १६ ॥

सुगुप्तं रक्ष्यमाणोऽपि दर्शयन्दारुणं वपुः ।
व्याघ्रचर्मप्रतिच्छन्नो वाकृते रासभो हतः ॥ १७ ॥

पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम् ।
मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः॥१८॥

रूपवानपि यो मूर्खः स गत्वा विदुषां सभाम् ।
संरक्षेद्वै स्वकां जिह्वां भार्यां दुश्चारिणीं यथा ॥ १९ ॥

स्वायत्तमेकान्तहितमज्ञताच्छादनं तथा ।
परमं भूषणं मौनं मूर्खाणां पण्डिताग्रतः ॥ २० ॥

---

## ५. कुपुत्रः ।

कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ।
किं तया क्रियते धेन्वा या न दोग्ध्री न गर्भिणी ॥२१॥

अजातमृतमूर्खाणां मृताजातौ सुतौ वरम् ।
सकृद्दुःखकरावेतावन्तिमस्तु पदे पदे ॥ २२ ॥

एकेन शुष्कवृक्षेण दह्यमानेन वह्निना ।
दह्यते तद्वनं सर्वं कुपुत्रेण कुलं तथा ॥ २३ ॥

कोटरान्तः स्थितो वह्निः तरुं कृत्स्नं यथा दहेत् ।
तथा कुपुत्रः स्वकुलं कृत्स्नं दहति भारत ॥ २४ ॥

अविनीतः सुतो जातो दहनात्मक एव सः ।
विनीतो यदि जायेत स एव पुरुषोत्तमः ॥ २५ ॥

---

## ६. कृपणः ।

कृपणेन समो दाता न भूतो न भविष्यति ।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥ २६ ॥

लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया ।
दाता तु विसृजत्यर्थं तयैव खलु शङ्कया ॥ २७ ॥

न दातुं नोपभोक्तुं च शक्नोति कृपणः श्रियम् ।
किंतु स्पृशति हस्तेन नपुंसक इव स्त्रियम् ॥ २८ ॥

शरणं किं प्रपन्नानि विषवन्मारयन्ति वा ।
न त्यज्यन्ते न भुज्यंते कृपणेन धनानि यत् ॥ २९ ॥

अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम् ।
यच्च बाहुबलं भीरोर्व्यर्थमेतत्त्रयं भुवि ॥ ३० ॥

---

## ७. दरिद्रः ।

भो दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥ ३१ ॥

परीक्ष्य सत्कुलं विद्यां शीलं शौर्यं सुरूपताम् ।
विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥ ३२ ॥

इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनोऽपि दरिद्राणां नराणां दुर्जनायते ॥ ३३ ॥

चाण्डालश्च दरिद्रश्च द्वावेतौ सदृशाविह ।
चाण्डालोऽपि दरिद्रोऽपि सर्वकर्मसु निन्दितौ ॥ ३४ ॥

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ ३५ ॥

---

## ८. सेवकः ।

स्वाभिप्रायपरोक्षस्य प्रभुचित्तानुवर्तिनः ।
स्वयं विक्रीतदेहस्य सेवकस्य कुतः सुखम् ॥ ३६ ॥

सेवा श्ववृत्तिर्यैरुक्ता न तैः सम्यगुदाहृतम् ।
स्वच्छन्दं चरति श्वात्र परतन्त्रस्तु सेवकः ॥ ३७ ॥

वरं वनं वरं भिक्षा वरं भारोपजीवनम् ।
पुंसां विवेकहीनानां न तु सेवोपजीवनम् ॥ ३८ ॥

सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् ।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ ३९ ॥

मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितम् ।
प्रथमो यो न तत्रापि स किं जीवत्सु गण्यते ॥ ४० ॥

---

## ९. याचकः ।

तृणाल्लघुतरस्तूलस्तूलादपि च याचकः ।
वायुना नीयते नासौ मामयं प्रार्थयेदिति ॥ ४१ ॥

देहीति वचनं श्रुत्वा हृदिस्थाः पञ्च देवताः ।
मुखान्निर्गत्य गच्छन्ति श्रीह्रीधीधृतिकीर्तयः ॥ ४२ ॥

अदृष्टमुखभङ्गस्य युक्तमन्धस्य याचितुम् ।
अहो बत महत्कष्टं चक्षुष्मानपि याचते ॥ ४३ ॥

तीक्ष्णधारेण खड्गेन वरं जिह्वाविदारणम् ।
न तु मानं परित्यज्य देहि देहीति भाषणम् ॥ ४४ ॥

काक आह्वयते काकान् याचकस्तु न याचकान् ।
काकयाचकयोर्मध्ये वरं काको न याचकः ॥ ४५ ॥

---

## १०. आशा ।

आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला ।
यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥४६॥

क्षुत्तृडाशाः कुटुम्बिन्यो मयि तिष्ठन्ति नान्यगाः ।
तासामाशा महासाध्वी कदाचिन्मां न मुञ्चति ॥४७॥

गिरिर्महान्गिरेराब्धिर्महानब्धेर्नभो महत् ।
नभसोऽपि महद्ब्रह्म ततोऽप्याशा गरीयसी ॥ ४८ ॥

च्युता दन्ताः सिताः केशाः स्खलितं च पदे पदे ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ४९ ॥

तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येनाशां पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥ ५० ॥

---

## ११. अर्थः ।

अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते ।
जनितारमपि त्यक्त्वा निःस्वं गच्छति दूरतः ॥ ५१ ॥

लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् ।
शेषे धराभराक्रान्ते शेते नारायणः सुखम् ॥ ५२ ॥

यौवनं धनसंपत्तिः प्रभुत्वमाविवेकिता ।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ ५३ ॥

अर्थानामार्जने दुःखमार्जितानां च रक्षणे ।
आये दुःखं व्यये दुःखं धिगर्थान्दुःखसंश्रयान् ॥५४॥

यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ ५५ ॥

---

## १२. लोभः ।

लोभः सर्वात्मना त्याज्यो लोभोहि सुमहान्रिपुः ।
द्वेषक्रोधादिजनको लोभः पापस्य कारणम् ॥ ५६ ॥

लोभेन बुद्धिश्चलति लोभो जनयते तृषाम् ।
तृषितो दुःखमाप्नोति परत्रेह च मानवः ॥ ५७ ॥

मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम् ।
लोभाविष्टो नरो हन्ति स्वामिनंवा स्वपोषकम् ॥५८॥

लोभाविष्टो नरो वित्तं वीक्षते न स चापदम् ।
दुग्धं पश्यति मार्जारो यथा न लगुडाहतिम् ॥ ५९ ॥

लोभात्क्रोधः प्रभवति क्रोधाद्द्रोहः प्रवर्तते ।
द्रोहेण नरकं याति तस्माल्लोभं परित्यजेत् ॥ ६० ॥

## १३. कृतघ्नः ।

ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ६१ ॥

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः ।
त्रयस्ते नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ६२ ॥

अपि ब्रह्मवधं कृत्वा प्रायश्चित्तेन शुध्यति ।
परैः कृतं तु विस्मृत्य कृतघ्नो नैव शुध्यति ॥ ६३ ॥

ब्रह्मघ्नं बालघ्नं भ्रूणघ्नं चापि सूष्व वा मातः।
प्रायश्चित्तविहीनं कृतघ्नसूनुं न जातु सूयेथाः ॥ ६४ ॥

शोकं मा कुरु कुक्कुर सत्त्वेष्वहमधम इति महासाधो ।
कष्टादपि कष्टतरं दृष्ट्वा श्वानं कृतघ्ननामानम् ॥ ६५ ॥

## १४. कुकविः ।

किं कवेस्तस्य काव्येन किंकाण्डेन धनुष्मतः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ ६६ ॥

विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः ।
कुलजा या सा जाया केवलजाया तु केवलं माया ॥

अवयः केवलकवयः कीराः स्युः केवलं धीराः ।
वीराः पण्डितकवयस्तानवमन्ता तु केवलं गवयः ॥

अहमपि परेऽपि कवयस्तथापि महदन्तरं परिज्ञेयम् ।
ऐक्यं रलयो र्यद्यपि तत्किं कलभायते करभः ॥६९॥

सरसा सालंकारा सुपदन्यासा सुवर्णमयमूर्तिः ।
आर्या तथैव भार्या न लभ्यते पुण्यहीनेन ॥ ७० ॥

---

## १५. दुर्मन्त्री ।

दुर्मन्त्री राज्यनाशाय ग्रामनाशाय कुञ्जरः ।
स्यालको गृहनाशाय सर्वनाशाय मातुलः ॥ ७१ ॥

दुर्योधनः समर्थोऽपि दुर्मन्त्री प्रलयं गतः ।
राज्यमेकश्चकाराच्चैः सुमन्त्री चन्द्रगुप्तकः ॥ ७२ ॥

पातकानां समस्तानां द्वे महापातके मते ।
एकं दुःसचिवो राजा द्वितीयं च तदाश्रयः ॥ ७३ ॥

गुणालयोऽप्यसन्मन्त्री नृपतिर्नाधिगम्यते ।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ ७४ ॥

विषादिग्धस्य भक्तस्य दन्तस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ ७५ ॥

---

## १६. परगृहवासः ।

शिरसा धार्यते सोमः सदा सौम्येन शंभुना ।
तथापि कृशतां धत्ते कष्टः खलु पराश्रयः ॥ ७६ ॥

विना कार्येण ये मूढाः गच्छन्ति परमान्दिरम् ।
तेऽवश्यं लघुतां यान्ति कृष्णपक्षे यथा शशी ॥ ७७ ॥

कष्टं खलु मूर्खत्वं कष्टं खलु यौवनेषु दारिद्र्यम् ।
कष्टादपि कष्टतरं परगृहवासः परान्नं च ॥ ७८ ॥

रोगी चिरप्रवासी परान्नभोजी परावसथशायी ।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥ ७९ ॥

उडुगणपरिवारो नायकोऽप्योषधीनाम्
अमृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः ।
भवति विगततेजा मण्डलं प्राप्य भानोः
परसदननिविष्टः को लघुत्वं न याति ॥ ८० ॥

---

## १७. आत्मश्लाघा अपौरुषं च ।

परैः प्रोक्ता गुणा यस्य निर्गुणोऽपि गुणी भवेत् ।
इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ॥ ८१ ॥

न सुखं न च सौभाग्यं स्वयं प्रख्यापितैर्गुणैः ।
यथैव हि पुरन्ध्रीणां स्वसौन्दर्यस्य वर्णने ॥८२॥

स्वयमेव न कर्तव्यं स्वगुणख्यापनं बुधैः ।
स्वगुणख्यापनं युक्त्या परद्वारा प्रयोजयेत् ॥ ८३ ॥

असंपादयतः कंचिदर्थं जातिक्रियागुणैः ।
यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम् ॥ ८४ ॥

मा जीवन्यः परावज्ञादुःखदग्धोऽपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ ८५ ॥

---

## १८. कुवैद्यः ।

वैद्यराज नमस्तुभ्यं यमराजसहोदर ।
यमस्तु हरति प्राणान् त्वं प्राणांश्च धनानि च ॥८६॥

वैद्यराज नमस्तुभ्यं क्षपिताशेषमानव ।
त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते ॥ ८७ ॥

चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः ।
नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥ ८८ ॥

कषायैरुपवासैश्च कृतां नीरोगतां नृणाम् ।
निजौषधकृतां वैद्यो निवेद्य हरते धनम् ॥ ८९ ॥

अज्ञातशास्त्रसद्भावान् शास्त्रमात्रपरायणान् ।
त्यजेद्दूराद्भिषक्पाशान् पाशान्वैवस्वतानिव ॥ ९० ॥

---

## १९. मद्यम् ।

एकतश्चतुरो वेदाः ब्रह्मचर्यं तथैकतः ।
एकतः सर्वपापानि मद्यपानं तथैकतः ॥ ९१ ॥

वैकल्यं धरणीपातमयथोचितजल्पनम् ।
संनिपातस्य चिह्नानि मद्यं सर्वाणि दर्शयेत् ॥ ९२ ॥

मद्यपस्य कुतः सत्यं दया मांसाशिनः कुतः ।
कामिनश्च कुतो विद्या निर्धनस्य कुतः सुखम् ॥ ९३ ॥

मद्यपाः किं न जल्पन्ति किं न भक्षन्ति वायसाः ।
कवयः किं न पश्यन्ति किं न कुर्वन्ति योषितः ॥९४॥

चित्ते भ्रान्तिर्जायते मद्यपानात्
भ्रान्ते चित्ते पापचर्यामुपैति ।
पापं कृत्वा दुर्गतिं याति मूढः
तस्मान्मद्यं नैवपेयं न पेयम् ॥ ९५ ॥

---

## २०. कलिः ।

यवनैरवनिः क्रान्ता हिन्दवो विन्ध्यमाविशन् ।
बलिना वेदमार्गोऽयं कलिना कवलीकृतः ॥ ९६ ॥

सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति ।
कुमार्यश्च प्रसूयन्ते पापिन्यस्मिन् कलौ युगे ॥ ९७ ॥

परान्नेन मुखं दग्धं हस्तौ दग्धौ प्रतिग्रहात् ।
परस्त्रीभिर्मनो दग्धं कुतः शापः कलौ युगे ॥ ९८ ॥

राक्षसाः कलिमाश्रित्य जायन्ते ब्रह्मयोनिषु ।
ब्राह्मणानेव बाधन्ते तत्रापि श्रोत्रियान्कृशान् ॥ ९९ ॥

कृते च रेणुका कृत्या त्रेतायां जानकी तथा ।
द्वापरे द्रौपदी कृत्या कलौ कृत्या गृहे गृहे ॥ १०० ॥

इति निन्दाशतकम् ॥



ॐ

# ॥ श्रीरामोदन्तः ॥



BY

**S. VENKATARAMA SASTRI,**
*Senior Sanskrit Pandit,*
**TOWN HIGH SCHOOL, KUMBAKONAM.**



SECOND EDITION-3000 COPIES.



PUBLISHED BY
**C. S. DIKSHITAR & Co.,**
News-agents and Book-sellers,
KUMBAKONAM.



**Printed at the**
**SRI VIDYA PRESS,**
**Kumbakonam.**

1929.

## ॥ श्रीरामोदन्तः ॥

श्रीपतिं प्रणिपत्याहं श्रीवत्साङ्कितवक्षसम् ।
श्रीरामोदन्तमाख्यास्ये श्रीवाल्मीकिप्रकीर्तितम् ॥ १ ॥

पुरा विश्रवसः पुत्रो रावणो नाम राक्षसः ।
आसीदस्यानुजौ चास्तां कुम्भकर्णविभीषणौ ॥ २ ॥

ते तु तीव्रेण तपसा प्रत्यक्षीकृत्य वेधसम् ।
वव्रिरे च वरानिष्टानस्मादाश्रितवत्सलात् ॥ ३ ॥

रावणो मानुषादन्यैरवध्यत्वं तदावृणोत् ।
निर्देवत्वेच्छया निद्रां कुम्भकर्णोऽवृणीत च ॥ ४ ॥

विभीषणो विष्णुभक्तिं वव्रे सत्त्वगुणान्वितः ।
तेभ्य एतान्वरान्दत्त्वा तत्रैवान्तर्दधे प्रभुः ॥ ५ ॥

रावणस्तु ततो गत्वा रणे जित्वा धनाधिपम् ।
लङ्कापुरीं पुष्पकं च हृत्वा तत्रावसत्सुखम् ॥ ६ ॥

यातुधानास्ततः सर्वे रसातलनिवासिनः ।
दशाननं समाश्रित्य लङ्कायां सुखमावसन् ॥ ७ ॥

मन्दोदरीं मयसुतां परिणीय दशाननः ।
तस्यामुत्पादयामास मेघनादाह्वयं सुतम् ॥ ८ ॥

रसां रसातलं चैव विजित्य स तु रावणः ।
लोकान्सर्वान्समाक्रम्य जहार च विलासिनीः ॥ ९ ॥

दूषयन्वैदिकं कर्म द्विजानर्दयति स्म सः ।
आत्मजेन ततो युद्धे वासवं चाप्यपीडयत् ॥ १० ॥

तदीयतरुरत्नानि पुनरानाय्य किंकरैः ।
स्थापयित्वा तु लङ्कायामवसच्च चिराय सः ॥ ११ ॥

ततस्तस्मिन्नवसरे विधातारं दिवौकसः ।
उपगम्योचिरे सर्वे रावणस्य विचेष्टितम् ॥ १२ ॥

तदाकर्ण्य सुरैःसाकं प्राप्य दुग्धोदधेस्तटम् ।
तुष्टाव च हृषीकेशं विधाता विविधैः स्तवैः ॥ १३ ॥

आविर्भूयाथ दैत्यारिः पप्रच्छ च पितामहम् ।
किमर्थमागतोऽसि त्वं साकं देवगणैरिति ॥ १४ ॥

ततो दशाननात्पीडामजस्तस्मै न्यवेदयत् ।
तच्छ्रुत्वोवाच धातारं हर्षयन्विष्टरश्रवाः ॥ १५ ॥

अलं भयेनात्मयोने गच्छ देवगणैः सह ।
अहं दाशरथिर्भूत्वा हनिष्यामि दशाननम् ॥ १६ ॥

आत्मांशैश्च सुराः सर्वे भूमौ वानररूपिणः ।
जायेरन्मम साहाय्यं कर्तुं रावणनिग्रहे ॥ १७ ॥

एवमुक्त्वा विधातारं तत्रैवान्तर्दधे प्रभुः ।
पद्मयोनिस्तु गीर्वाणैः समं प्रायात्प्रहृष्टधीः ॥ १८ ॥

अजीजनत्ततः शक्रो वालिनं नाम राक्षसम् । (?)
सुग्रीवमपि मार्तण्डो हनुमन्तं च मारुतः ॥ १९ ॥

पुरैव जनयामास जाम्ववन्तं च पद्मजः ।
एवमन्ये च विबुधाः कपीनजनयन्बहून् ॥ २० ॥

ततो वानरसंघानां वाली परिवृढोऽभवत् ।
अमीभिरखिलैः साकं किष्किन्धामध्युवास च ॥ २१ ॥

आसीद्दशरथो नाम सूर्यवंशेऽथ पार्थिवः ।
भार्यास्तिस्रोऽपि लब्ध्वासौ तासु लेभे न संततिम् २२

ततः सुमन्त्रवचनादृश्यशृङ्गं स भूपतिः ।
आनीय पुत्रकामेष्टिमारेभे सपुरोहितः ॥ २३ ॥

अथाग्नेरुत्थितः कश्चिद्गृहीत्वा पायसं चरुम् ।
एतत्प्राशय पत्नीस्त्वमित्युक्त्वाऽदान्नृपाय सः ॥२४॥

तद्गृहीत्वा तदैवासौ पत्नीः प्राशयदुत्सुकः ।
ताश्च तत्प्राशनादेव नृपाद्गर्भमधारयन् ॥ २५ ॥

पूर्णे कालेऽथ कौसल्या सज्जनाम्भोजभास्करम् ।
अजीजनद्रामचन्द्रं कैकेयी भरतं तथा ॥ २६ ॥

ततो लक्ष्मणशत्रुघ्नौ सुमित्राऽजीजनत्सुतौ ।
अकारयत्पिता तेषां जातकर्मादिकं द्विजैः ॥ २७ ॥

ततो ववृधिरेऽन्योन्यं स्निग्धाश्चत्वार एव ते ।
सकलासु च विद्यासु नैपुण्यमभिलेभिरे ॥ २८ ॥

ततः कदाचिदागत्य विश्वामित्रो महामुनिः ।
ययाचे यज्ञरक्षार्थं रामं शक्तिधरोपमम् ॥ २९ ॥

वसिष्ठवचनाद्रामं लक्ष्मणेन समन्वितम् ।
कृच्छ्रेण नृपतिस्तस्य कौशिकस्य करे ददौ ॥ ३०

तौ गृहीत्वा ततो गच्छन्बलामतिबलां तथा ।
अस्त्राणि च समग्राणि ताभ्यामुपदिदेश सः ॥ ३१ ॥

गच्छन्सहानुजो रामः कौशिकेन प्रचोदितः ।
ताटकामवधीद्धीमाँल्लोकपीडनतत्पराम् ॥ ३२ ॥

ततः सिद्धाश्रमं प्राप्य कौशिकः सहराघवः ।
अध्वरं च समारेभे राक्षसाश्च समागमन् ॥ ३३ ॥

राघवस्तु ततोऽस्त्रेण क्षिप्त्वा मारीचमर्णवे ।
सुबाहुप्रमुखान्हत्वा यज्ञं चापालयन्मुनेः ॥ ३४ ॥

कौशिकेन ततो रामो नीयमानः सहानुजः ।
अहल्याशापनिर्मोक्षं कृत्वा संप्राप मैथिलम् ॥ ३५ ॥

जनकेनार्चितो रामः कौशिकेन प्रचोदितः ।
सीतानिमित्तमानीतं बभञ्ज धनुरैश्वरम् ॥ ३६ ॥

ततो दशरथं दूतैरानाय्य मिथिलाधिपः ।
रामादिभ्यस्ततस्तेभ्यः सीताद्याः कन्यका ददौ ॥ ३७ ॥

ततो गुरुनियोगेन कृतोद्वाहः सहानुजः ।
राघवो निर्ययौ तेन जनकेनोरु मानितः ॥ ३८ ॥

तदाकर्ण्य धनुर्भङ्गमायान्तं रोषभीषणम् ।
विजित्य भार्गवं राममयोध्यां प्राप राघवः ॥ ३९ ॥

ततः सर्वजनानन्दं कुर्वाणश्चेष्टितैः स्वकैः ।
तामध्युवास काकुत्स्थः सीतया सहितः सुखम् ॥४०॥

॥ इति श्रीबालकाण्डः ॥ १ ॥

---

एतस्मिन्नन्तरे गेहं मातुलस्य युधाजितः ।
प्रययौ भरतः प्रीतः शत्रुघ्नेन समन्वितः ॥ १ ॥

ततः प्रकृतिभिः साकं मन्त्रयित्वा स भूपतिः ।
अभिषेकाय रामस्य समारेभे मुदाऽन्वितः ॥ २ ॥

कैकेयी तु महीपालं मन्थरादूषिताशया ।
वरद्वयं पुरा दत्तं ययाचे सत्यसंगरम् ॥ ३ ॥

वनवासाय रामस्य राज्याप्त्यै भरतस्य च ।
तस्या वरद्वयं कृच्छ्रमनुजज्ञे महीपतिः ॥ ४ ॥

रामं तदैव कैकेयी वनवासाय चादिशत् ।
अनुज्ञाप्य गुरून् सर्वान्निर्ययौ च वनाय सः ॥ ५ ॥

दृष्ट्वा तं निर्गतं सीता लक्ष्मणश्चानुजग्मतुः ।
संत्यज्य स्वगृहान्सर्वे पौराश्चानुययुर्द्रुतम् ॥ ६ ॥

वञ्चयित्वा कृशान्पौरान्निद्राणान्निशि राघवः ।
वाह्यमानं सुमन्त्रेण रथमारुह्य चागमत् ॥ ७ ॥

शृङ्गिबेरपुरं गत्वा गङ्गाकूलेऽथ राघवः ।
गुहेन सत्कृतस्तत्र निशामेकामुवास च ॥ ८ ॥

सारथिं संनिमन्त्र्यासौ सीतालक्ष्मणसंयुतः ।
गुहेनानीतया नावा संततार च जाह्नवीम् ॥ ९ ॥

भरद्वाजमुनिं प्राप्य तं नत्वा तेन सत्कृतः ।
राघवस्तस्य निर्देशाच्चित्रकूटेऽवसत्सुखम् ॥ १० ॥

अयोध्यां तु ततो गत्वा सुमन्त्रः शोकविह्वलः ।
राज्ञे न्यवेदयत्सर्वं राघवस्य विचेष्टितम् ॥ ११ ॥

तदाकर्ण्य सुमन्त्रोक्तं राजा दुःखविमूढधीः ।
राम रामेति विलपन्देहं त्यक्त्वा दिवं ययौ ॥ १२ ॥

मन्त्रिणस्तु वसिष्ठोक्त्या देहं संरक्ष्य भूपतेः ।
दूतैस्तमानयामासुर्भरतं मातुलालयात् ॥ १३ ॥

भरतस्तु मृतं श्रुत्वा पितरं कैकयीगिरा ।
संस्कारादि चकारास्य यथाविधि सहानुजः ॥ १४

अमात्यैश्चोद्यमानोपि राज्याय भरतस्तदा ।
वनायैव ययौ राममानेतुं नागरैः सह ॥ १५ ॥

स गत्वा चित्रकूटस्थं रामं चीरजटाधरम् ।
ययाचे रक्षितुं राज्यं वसिष्ठाद्यैर्द्विजैः सह ॥ १६ ॥

चतुर्दश समा नीत्वा पुनरेष्याम्यहं पुरीम् ।
इत्युक्त्वा पादुके दत्त्वा तं रामः प्रत्ययापयत् ॥ १७ ॥

गृहीत्वा पादुके तस्माद्भरतो दीनमानसः ।
नन्दिग्रामे स्थितस्ताभ्यां ररक्ष च वसुंधराम् ॥ १८ ॥

राघवस्तु गिरेस्तस्माद्गत्वाऽत्रिं समवन्दत ।
तत्पत्नी तु तदा सीतां भूषणैः स्वैरभूषयत् ॥ १९ ॥

उषित्वा तु निशामेकामाश्रमे तस्य राघवः ।
विवेश दण्डकारण्यं सीतालक्ष्मणसंयुतः ॥ २० ॥

॥ इत्ययोध्याकाण्डः ॥ २ ॥

---

अथान्वयेन काकुत्स्थो विराधं विधिचोदितम् ।
सदारानुजमात्मानं हरन्तमवधीत्तदा ॥ १ ॥

शरभङ्गाश्रमं प्राप्य स्वर्गतिं तस्य वीक्ष्य सः ।
प्रतिजज्ञे राक्षसानां वधं मुनिभिरर्थितः ॥ २ ॥

तस्माद्गत्वा सुतीक्ष्णं च प्रणम्यानेन पूजितः ।
अगस्त्यस्याश्रमं प्राप्य तं ननाम रघूत्तमः ॥ ३ ॥

रामाय वैष्णवं चापमैन्द्रं तूणीयुगं तथा ।
ब्राह्मं चास्त्रं च खड्गं च प्रददौ कुम्भसंभवः ॥ ४ ॥

ततः स गच्छन्काकुत्स्थः समागम्य जटायुषम् ।
वैदेह्याः पालनायैनं श्रद्दधे पितृवल्लभम् ॥ ५ ॥

ततः पञ्चवटीं प्राप्य तत्र लक्ष्मणनिर्मिताम् ।
पर्णशालामध्युवास सीतया सहितः सुखम् ॥ ६ ॥

तत्राभ्येत्यैकदा रामं वव्रे शूर्पणखाऽभिका ।
तन्निरस्ता लक्ष्मणं सा वव्रे सोऽपि निराकरोत् ॥ ७ ॥

रामयेन ततो वव्रे कामार्ता कामसंनिभम् ।
पुनश्च विकृता तेन सीताभक्षणमुद्यता ॥ ८ ॥

लक्ष्मणेन तदा रोषात्कृत्तश्रवणनासिका ।
सा तु गत्वा जनस्थानं खरायैतन्न्यवेदयत् ॥ ९ ॥

तदाकर्ण्य खरः क्रुद्धो राघवं हन्तुमाययौ ।
दूषणत्रिशिरोमुख्यैर्यातुधानैः समन्वितः ॥१० ॥

तत्क्षणं लक्ष्मणे सीतां निधाय रघुनन्दनः ।
खरं सहानुगं संख्ये जघान लघुविक्रमः ॥ ११ ॥

ततः शूर्पणखा गत्वा लङ्कां शोकसमन्विता ।
न्यवेदयद्रावणाय वृत्तान्तं सर्वमादितः ॥ १२ ॥

तच्छ्रुत्वा रावणः सीतां हर्तुं कृतमतिस्तदा ।
मारीचस्याश्रमं प्राप्य साहाय्ये तमचोदयत् ॥ १३ ॥

सोऽपि हेममृगो भूत्वा सीतायाः प्रमुखेऽचरत् ।
सा तु तं मृगमाहर्तुं भर्तारं समयाचत ॥ १४ ॥

नियुज्य लक्ष्मणं सीतां रक्षितुं रघुनन्दनः ।
अन्वगच्छन्मृगं तूर्णं द्रवन्तं काननान्तरे ॥ १५ ॥

विव्याध च मृगं रामः स निजं रूपमास्थितः ।
हा सीते लक्ष्मणेत्येवं क्रन्दमानः समत्यजत ॥ १६ ॥

एतदाकर्ण्य वैदेह्या लक्ष्मणश्चोदितो भृशम् ।
तद्रक्षां देवताः प्रार्थ्य प्रययौ राघवान्तिकम् ॥ १७ ॥

तदन्तरं समासाद्य रावणो यतिरूपधृत् ।
सीतां गृहीत्वा प्रययौ गगनेन मुदाऽन्वितः ॥ १८ ॥

ततो जटायुरालोक्य नीयमानां तु जानकीम् ।
प्राहरद्रावणं प्राप्य तुण्डपक्षनखैर्भृशम् ॥ १९ ॥

छित्त्वैनं चन्द्रहासेन पातयित्वा च भूतले ।
गृहीत्वा रावणः सीतां प्राविशन्निजमन्दिरम् ॥ २० ॥

अशोकवनिकामध्ये संस्थाप्य जनकात्मजाम् ।
रावणो रक्षितुं चैनां नियुयोज निशाचरीः ॥ २१ ॥

हत्वा रामस्तु मारीचमागच्छन्ननुजेरिताम् ।
वार्तामाकर्ण्य दुःखार्तः पर्णशालामुपागमत् ॥ २२ ॥

अदृष्ट्वा तत्र वैदेहीं विचिन्वानो वनान्तरे ।
सहानुजो गृध्रराजं छिन्नपक्षं ददर्श सः ॥ २३ ॥

तेनोक्तां जानकीवार्तां श्रुत्वा पश्चान्मृतं च तम् ।
दृष्ट्वा सहानुजो रामश्चक्रे तस्योदकक्रियाम् ॥ २४ ॥

आत्मनोऽभिभवं पश्चात्कुर्वतीं पथि लक्ष्मणः ।
अयोमुखीं चकाराशु कृत्तश्रवणनासिकाम् ॥ २५ ॥

गृहीतौ तौ कबन्धेन भुजौ तस्य न्यकृन्तताम् ।
ततस्तु याचितौ तेन तद्देहं देहतुश्च तौ ॥ २६ ॥

स तु दिव्याकृतिर्भूत्वा रामं सीतोपलब्धये ।
सुग्रीवमृश्यमूकस्थं याहीत्युक्त्वा दिवं ययौ ॥ २७ ॥

ततः प्रीतो रघुश्रेष्ठः शबर्याश्रममभ्यगात् ।
तयाऽभिपूजितः पश्चात्पम्पां प्राप सलक्ष्मणः ॥ २८ ॥

॥ इत्यारण्यकाण्डः ॥ ३ ॥

---

हनुमानथ सुग्रीवनिर्दिष्टौ रामलक्ष्मणौ ।
प्राप्य श्रुत्वाच वृत्तान्तं तेन तौ समयोजयत् ॥ १ ॥

ततो रामस्य वृत्तान्तं सुग्रीवाय निवेद्य सः ।
सख्यं च कारयामास तयोः पावकसंनिधौ ॥ २ ॥

प्रतिजज्ञे तदा रामो हनिष्यामीति वालिनम् ।
दर्शयिष्यामि वैदेहीमित्यन्येन च संश्रुतम् ॥ ३ ॥

सुग्रीवेणाथ रामाय भ्रातृवैरस्य कारणम् ।
निवेदितमशेषेण बलाधिक्यं च तस्य तत् ॥ ४ ॥

तत्क्षणं दुन्दुभेः कायं सुग्रीवेण प्रदर्शितम् ।
सुदूरं प्रेषयामास पादाङ्गुष्ठेन राघवः ॥ ५ ॥

पुनश्च दर्शितांस्तेन सालान्सप्त रघूत्तमः ।
बाणेनैकेन चिच्छेद सार्धं तस्यानुशङ्कया ॥ ६ ॥

किष्किन्धां प्राप्य सुग्रीवस्ततो रामसमन्वितः ।
जगर्जातीव संहृष्टः कोपयन्वानराधिपम् ॥ ७ ॥

वाली निष्क्रम्य सुग्रीवं समरेऽपीडयद्भृशम् ।
सोऽपि संभग्नसर्वाङ्गः प्राद्रवद्राघवान्तिकम् ॥ ८ ॥

कृतचिह्नस्तु रामेण पुनरेव स वालिनम् ।
रणायाथाह्वयत्क्षिप्रं तस्थौ रामस्तिरोहितः ॥ ९ ॥

हेममाली ततो वाली तारयाऽभिहितं हितम् ।
निरस्य कुपितो भ्रात्रा रणं चक्रे सुदारुणम् ॥ १० ॥

बाणेन वालिनं रामो विद्ध्वा भूमौ न्यपातयत् ।
सोऽपि राम इति ज्ञात्वा देवं त्यक्त्वा दिवं ययौ ॥ ११ ॥

पश्चात्तपन्तं सुग्रीवं समाश्वास्य रघूत्तमः।
वानराणामधिपतिं चकाराश्रितवत्सलः ॥ १२ ॥

ततो माल्यवतः पृष्ठे रामो लक्ष्मणसंयुतः।
उवास चतुरो मासान्सीताविरहदुःखितः ॥ १३ ॥

अथ रामस्य निर्देशाल्लक्ष्मणो वानराधिपम्।
आनयत्प्लवगैः सार्धं हनूमत्प्रमुखैर्गिरिम् ॥ १४ ॥

सुग्रीवो राघवं दृष्ट्वा वचनात्तस्य वानरान्।
न्वयुङ्क्त सीतामन्वेष्टुमाशासु चतसृष्वपि ॥ १५ ॥

ततो हनुमतः पाणौ ददौ रामोऽङ्गुलीयकम्।
विश्वासाय तु वैदेह्यास्तद्गृहीत्वा स निर्ययौ ॥ १६ ॥

ततो हनूमत्प्रमुखा वानरा दक्षिणां दिशम्।
गत्वा सीतां विचिन्वन्तः पर्वतं विन्ध्यमाप्नुवन् ॥१७॥

समयातिक्रमात्तत्र चक्रुः प्रायोपवेशनम्।
तत्र संपातिना प्रोक्तां सीतावार्तां च शुश्रुवुः ॥ १८ ॥

ततः प्रापुरुदन्वन्तमङ्गदाद्याः प्लवंगमाः।
तं विलङ्घयितुं तेषां न कश्चिदभवत्क्षमः ॥ १९ ॥

स्वप्रभावप्रशंसाभिर्भृशं जाम्बवता तदा ।
संवर्धितो महेंद्राद्रिमारुरोहानिलात्मजः ॥ २० ॥

इति किष्किन्धाकाण्डः ॥ ४ ॥

---

अभिवाद्याथ सकलानमरान्पवनात्मजः ।
पुप्लुवे च गिरेस्तस्माद्विलङ्घयितुमर्णवम् ॥ १ ॥

स तोषयित्वा मैनाकं सुरसामभिवाद्य च ।
निहत्य सिंहिकां नीत्या पारं प्राप महोदधेः ॥ २ ॥

लङ्काधिदेवतां जित्वा तां प्रविश्यानिलात्मजः ।
सीतां विचिन्वन्नद्राक्षीन्निद्राणं निशि रावणम् ॥ ३ ॥

अपश्यंस्तत्र वैदेहीं विचिन्वानस्ततस्ततः ।
अशोकवनिकां गत्वा सीतां खिन्नां ददर्श सः ॥ ४ ॥

पादपं कंचिदारुह्य तत्पलाशैः सुसंवृतः ।
आस्ते स्म मारुतिस्तत्र सीतेयमिति तर्कयन् ॥ ५ ॥

रावणस्तु तदाऽभ्येत्य मैथिलीं मदनार्दितः ।
भार्या भव ममेत्येवं बहुधा समयाचत ॥ ६ ॥

अहं त्वदनुगा न स्यामित्येषा तं निराकरोत् ।
काममन्युपरीतात्मा रावणोऽथ गृहं ययौ ॥ ७ ॥

गते तु रावणे सीतां प्रलपन्तीं स मारुतिः ।
उक्त्वा रामस्य वृत्तान्तं प्रददौ चाङ्गुलीयकम् ॥ ८ ॥

तत्समादाय वैदेही विलप्य च भृशं पुनः ।
चूडामणिं ददौ तस्य करे सा मारुतेः प्रियम् ॥ ९ ॥

मा विषादं कृथा देवि राघवो रावणं रणे ।
हत्वा त्वां नेष्यतीत्येनामाश्वास्य स विनिर्ययौ ॥१०॥

नीतिमान्सोऽपि संचिन्त्य बभञ्जोपवनं च तत् ।
अक्षादीनि च रक्षांसि बहूनि समरेऽवधीत् ॥ ११ ॥

ततः शक्रजिता युद्धे बद्धः पवननन्दनः ।
प्रतापं रघुनाथस्य रावणाय न्यवेदयत् ॥ १२ ॥

रक्षोदीपितलांगूलः स तु लङ्कामशेषतः ।
दग्ध्वा सागरमुत्तीर्य वानरान्समुपागमत् ॥ १३ ॥

स गत्वा वानरैः साकं राघवायात्मना कृतम् ।
निवेद्य सकलं कृत्यं ददौ चूडामणिं च तम् ॥ १४ ॥

॥ इति सुन्दरकाण्डः ॥ ५ ॥

अथासंख्यैः कपिगणैस्सुग्रीवप्रमुखैस्सह ।
निर्ययौ राघवस्तूर्णं तीरं प्राप महोदधेः ॥ १ ॥

तदा विभीषणो भ्रात्रा त्यक्तो राममुपागमत् ।
लङ्काधिपत्येऽभ्यषिञ्चदेनं रामोऽरिमर्द्दनः ॥ २ ॥

उक्तमार्गस्समुद्रेण तत्र सेतुं नलेन सः ।
कारयित्वा तेन गत्वा सुवेलं प्राप पर्वतम् ॥ ३ ॥

ततो राघवनिर्दिष्टा नीलमुख्याः प्लवङ्गमाः ।
रुरुधुस्सर्वतो लङ्कां वृक्षपाषाणपाणयः ॥ ४ ॥

रावणस्य नियोगेन निर्गतान्युधि राक्षसान् ।
प्रहस्तप्रमुखान्हत्वा नेदुस्ते सिंहविक्रमाः ॥ ५ ॥

सुग्रीवश्च हनूमांश्च तथा राघवलक्ष्मणौ ।
राक्षसान्सुबहून्युद्धे जघ्नुर्भीमपराक्रमाः ॥ ६ ॥

रावणिस्तु ततोऽभ्येत्य समरे रामलक्ष्मणौ ।
ननाह नागपाशेन नागारिस्तौ व्यमोचयत् ॥ ७ ॥

रावणोऽपि ततो युद्धे राघवेण पराजितः ।
कुम्भकर्णं प्रबोध्याशु रामं हन्तुं न्ययुङ्क्त च ॥ ८ ॥

ततो वानरसंघांश्च भक्षयन्तं निशाचरम् ।
ऐन्द्रेणास्त्रेण रामोऽपि निजघान रणे भृशम् ॥ ९ ॥

ततो रावणसंदिष्टौ देवान्तकनरान्तकौ ।
हनूमदङ्गदाभ्यां तु निहतौ रणमूर्धनि ॥ १० ॥

अथातिकायमायान्तं रथमारुह्य वाहिनीम् ।
अर्दयन्तं महाकायं लक्ष्मणश्चावधीच्छरैः ॥ ११ ॥

ततो रावणसंदिष्टश्शक्रजिद्राघवौ रणे ।
ब्रह्मास्त्रेण च तौ बद्ध्वा वानरांश्चावधीच्छरैः ॥१२॥

अथ जाम्बवतो वाक्याद्गत्वा चौषधिपर्वतम् ।
मारुतिश्चौषधीस्तत्रादृष्ट्वा कोपं चकार सः ॥ १३ ॥

भूधरं तं समुत्पाट्य गृहीत्वा पुनरागतः ।
तासां गन्धेन वै सर्वान्राघवादीनजीवयत् ॥ १४ ॥

रावणः कपिभिर्दग्धां पुरीं वीक्ष्य रुषान्वितः ।
न्ययुङ्क्त कुम्भकर्णस्य पुत्रौ हन्तुं च राघवौ ॥ १५ ॥

अथार्दयन्तौ तत्सैन्यं वीक्ष्य तौ बलशालिनौ ।
कुम्भं रामोऽवधीद्बाणैर्निकुम्भं चात्मजो रवेः ॥ १६ ॥

ततः खरात्मजं तेन रावणेन प्रचोदितम् ।
पीडयन्तं कपीन्बाणैर्जघानास्त्रेण राघवः ॥ १७ ॥

ततस्संतप्तहृदयो रावणो युद्धदुर्मदम् ।
प्रचोदयामास सुतं युद्धे हन्तुं स राघवौ ॥ १८ ॥

नगरान्निर्ययौ तूर्णमिन्द्राजित्समितिञ्जयः ।
मायासीतां विनिक्षिप्य सर्वेषां मोहनाय वै ॥ १९ ॥

वानरेष्वपि पश्यत्सु हनूमत्प्रमुखेषु च ।
जघान सीतां खड्गेन शितेन समितिञ्जयः ॥ २० ॥

युद्धं त्यक्त्वा ततस्सर्वैर्वानरैस्संपरीवृतः ।
दुःखितो हनुमांस्तत्र यत्र रामोऽग्रजल्लघु ॥ २१ ॥

उपगम्याब्रवीद्रामं हनूमान्निखिलं तदा ।
श्रुत्वा वृत्तान्तमखिलं रामो मोहमवाप सः ॥ २२ ॥

विभीषणोऽथ संप्राप्य दृष्ट्वा रामं च मूर्च्छितम् ।
विषण्णान्वानरान्वाचा सान्त्वयन्निदमब्रवीत् ॥ २३ ॥

मिथ्या विषादं संत्यज्य जगन्नायक हे प्रभो ।
शृणु मेऽभिहितं वाक्यं ज्ञात्वा रावणिमानसम् ॥ २४ ॥

दुरात्मना कृता माया राक्षसेन्द्रसुतेन वै ।
निकुम्भिलायां होमं तु कर्तुं तेनाधुना किल ॥ २५ ॥

लक्ष्मणं प्रेषयाद्यैव मया सह समन्त्रिणा ।
कृते होमे तत्र रिपुरजय्यो भवति ध्रुवम् ॥ २६ ॥

उवाच रामस्सौमित्रिं राक्षसेन्द्रसुतं जहि ।
गच्छेति शीघ्रं सहृदा रावणस्यात्मजेन सः ॥ २७ ॥

लक्ष्मणस्तु तदा राममामन्त्र्य सविभीषणः ।
निकुम्भिलां प्राप तूर्णमिन्द्रजिद्यत्र वर्तते ॥ २८ ॥

अदर्शयद्भ्रातृपुत्रं धर्मात्मा स विभीषणः ।
लक्ष्मणो भेदयामास राक्षसाञ्छरसंचयैः ॥ २९ ॥

कृत्वा चिरं तत्र युद्धमैन्द्रेणास्त्रेण वै रुषा ।
शिरश्चिच्छेद सौमित्रिर्दशाननसुतस्य हि ॥ ३० ॥

स सुतस्य वधं श्रुत्वा रावणश्शोककर्शितः ।
नष्टधैर्यो विह्वलाङ्गो विललापाकुलेन्द्रियः ॥ ३१ ॥

निरर्थकं तु मज्जन्म जल्पितं च निरर्थकम् ।
येनाहमद्य पश्यामि हतमिन्द्रजितं रणे ॥ ३२ ॥

क्व गतोऽसि हतश्शूर मानुषेण पदातिना ।
राज्याद्भ्रष्टेन दीनेन त्यक्त्वा मां पुत्र जीवितम् ॥ ३३ ॥

इन्द्रं जित्वा तु तं बद्ध्वा लङ्कामानीय वै बलात् ।
अकरोस्त्वं प्रतापेन कारागृहनिवासिनम् ॥ ३४ ॥

मोचयामास ब्रह्मा त्वां सान्त्वयित्वाऽमराधिपम् ।
तादृक्त्वं पुत्र मां त्यक्त्वा गतोऽद्य सुदुरासदः ॥ ३५ ॥

किं करिष्याम्यहं पुत्र क्व गच्छामि वदाऽधुना ।
नय मां यत्र गन्ताऽसि तत्र ते न विलम्बनम् ॥ ३६

लोकेषु त्वत्समो नास्ति तादृशस्य पितुर्मम
इत्याशया स्थितं पुत्र गर्वितेन मयाऽत्र हि ॥ ३७ ॥

धूम्राक्षो वज्रदंष्ट्रश्च कुम्भकर्णः प्रतापवान् ।
राक्षसा निहतास्सर्वे प्रहस्तप्रमुखा अपि ॥ ३८ ॥

अनादृत्य तु तान्सर्वान्राक्षसान्प्रहृतानपि ।
अवष्टभ्य बलं पुत्र सुखेनावस्थितं तव ॥ ३९ ॥

इत्येवं बहुधा तत्र विलप्य स तु रावणः ।
अन्तर्नियम्य दुःखानि कोपं चक्रे सुदारुणम् ॥ ४० ॥

रथं सूत ममाग्रे त्वं क्षिप्रं कुरु जयैषिणः ।
रामं सलक्ष्मणं हन्तुं निर्गमिष्याम्यहं गृहात् ॥ ४१ ॥

इत्युक्त्वा रथमारुह्य शीघ्रं सारथिनाहितम् ।
रामेण सह संगम्य युद्धं चक्रे सुदारुणम् ॥ ४२ ॥

ततो मातलिनाऽऽनीतं रथमैन्द्रं समारुहन् ।
रराज रामो धर्मात्मा ह्युदयस्थो यथा रविः ॥ ४३ ॥

चकार युद्धं तुमुलं देवबृन्दे च पश्यति ।
सीताहरणजात्कोपाद्रामो धर्मभृतां वरः ॥ ४४ ॥

अथागस्त्यस्य वचनाद्रावणं लोककण्टकम् ।
जघान रामो लक्ष्मीवान्ब्राह्मेणास्त्रेण तं रणे ॥ ४५ ॥

मन्दोदरी वधं श्रुत्वा भर्तुः प्रियतरस्य सा ।
विललाप रणं गत्वा कुररीव भृशातुरा ॥ ४६ ॥

विभीषणोऽथ रामेण संदिष्टः सह राक्षसैः ।
चकार दहनं तस्य रावणस्य गतायुषः ॥४७॥

अथाग्निवचनात्सीतां रामो वीक्ष्य सुनिर्मलाम् ।
संदिष्टो देवबृन्दैश्च जग्राह पितृसन्निधौ ॥४८॥

तवैव युक्तं कर्मैतत्सर्वलोकभयङ्करम् ।
यद्वैदेह्याः कृते राम सा तु लक्ष्मीर्भवान्स्वभूः ॥४९॥

इत्येवं देवसङ्घैश्च मुनिभिश्चाभिपूजितः ।
लक्ष्मणश्च तुतोषाथ रामो विश्वासमाययौ ॥५०॥

विभीषणस्य धर्मात्मा सत्यसन्ध उदारधीः ।
कारयामास लक्ष्मीवाननुजेनाभिषेचनम् ॥५१॥

ततः पुष्पकमारुह्य सह मित्रैर्जगत्पतिः ।
भार्यानुजाभ्यां सहितः किष्किन्धां प्राप राघवः ॥५२

किष्किन्धानिलयास्सर्वाः कपीनां योषितः प्रियाः ।
सीताकुतूहलात्पुष्पं विमानं तास्समारुहन् ॥५३॥

अथ दाशरथिः श्रीमान्भरतं द्रष्टुमिच्छया ।
भरद्वाजाश्रमं प्राप्तस्तत्र तेन निवारितः ॥५४॥

भरतस्यान्तिकं रामः प्रेषयामास मारुतिम् ।
रामस्यादर्शनाद्वह्निप्रवेशं काङ्क्षतो भृशम् ॥ ५५ ॥

तत्र तेन मुनींद्रेण सानुजस्ससुहृद्गणः ।
संतोषविवशेनाथ रामोऽपि विधिपूजितः ॥ ५६ ॥

रामोऽथ सह संगम्य भरतेनारिघातिना ।
अयोध्यां प्राविशत्तूर्णं मातृभिश्चाभिनन्दितः ॥ ५७ ॥

अथायोध्यानिवासास्ते जनास्सर्वेऽपि तोषिताः ।
अभिगम्याब्रुवन्नाय धन्या वयमिति द्रुतम् ॥ ५८ ॥

चातकस्तु घनान्दृष्ट्वा मयूराश्च यथा शिशून् ।
आसाद्य मातरस्तोषं तथा प्रापुर्जना भुवि ॥ ५९ ॥

अथाभिषेकं रामस्य वसिष्ठाद्या मुदान्विताः ।
सहिता मन्त्रिभिश्चक्रुर्वसवो वासवं यथा ॥ ६० ॥

अभिषेकोत्सवे सर्वे सुग्रीवाद्याः कपीश्वराः ।
यथार्हं पूजिताश्चासन्स्रग्गन्धाम्बरभूषणैः ॥ ६१ ॥

विशिष्य मुक्ताहारेण सीतया हनुमान्मुदम् ।
पूजितश्च तथा लेभे यथा सीतावलोकने ॥ ६२ ॥

सर्वासां वानरीणां च कौसल्या पुत्रवत्सला ।
भूषणैर्भूषयामास [illegible] कुङ्कुमैः ॥ ६३ ॥

रामाज्ञयाऽथ सर्वेपि सुग्रीवादिप्लवङ्गमाः ।
किष्किन्धां लेभिरे कृच्छ्राच्छ्रीरामविरहातुराः ॥

अतिभक्तो दीर्घजीवी लङ्कासमग्रसाधकः ।
अनुज्ञातस्स रामेण लङ्कां प्रायाद्विभीषणः ॥ ६५

पितुः सिंहासनं प्राप्य भ्रातृभिस्सहितोऽनघः ।
विरराज तथा रामो यथा विष्णुस्त्रिविष्टपे । ६६

लक्ष्मणानुमते रामो यौवराज्यं तु दत्तवान् ।
भरतायाप्रमेयाय प्राणात्प्रियतराय सः ॥ ६७ ॥

चत्वारस्ते महात्मानस्सभार्या रघुसत्तमाः ।
खं सतारो यथा चन्द्रस्तथा रेजुस्स्वपत्तने ॥ ६८

॥ इति युद्धकाण्डः ॥ ६ ॥

---

॥ श्री रामोदन्तस्समाप्तः ॥



# Sanskrit Series.

BY

Pandit S. VENKATARAMA SASTRI.

A classified list of books suitable for use in Secondary Schools and Sanskrit Pathasalas.

| | | Rs | As. | Ps. |
|---|---|---|---|---|
| 1. | कथाकुसुममञ्जरी Part I स्तबकाः 1 & 2 (9th Edition) | 0 | 8 | 0 |
| 2. | Do. Part II Do. 3 & 4 (6th Edition) | 0 | 10 | 0 |
| 3. | Do. Parts III Do. 5 & 6 | 0 | 8 | 0 |
| 4. | Do. Parts I to III in one volume | 1 | 8 | 0 |
| 5. | Do. Other stabakas in preparation. | | | |
| 6. | स्तुतिमञ्जरी in preparation. | | | |
| 7. | रामकृष्णसंवादमञ्जरी Do. | | | |
| 8. | सुभाषितमञ्जरी, श्रीरामोदन्तश्च । (2nd Edition.) | 0 | 6 | 0 |
| | [A poetical anthology for use in II & III forms.] | | | |
| 9. | शब्दमञ्जरी | 0 | 5 | 0 |
| 10. | प्रथमपाठमञ्जरी (a sanskrit primer for beginners.) | 0 | 6 | 0 |
| | भोजचरित्रसंग्रहः (कथाकुसुममञ्जर्याः पञ्चमस्तबकः) | 0 | 4 | 0 |
| | विक्रमार्कचरित्रम् (2nd Edition.) | 0 | 8 | 0 |
| | use in IV & V forms as A group sanskrit text.) | | | |

pies can be had of the Publishers:—

C. S. DIKSHITAR & Co.,

KUMBAKONAM.

# प-त्र-दू-त-म्

[ खण्ड-काव्यम् ]



कवयिता—

शास्त्री रुद्रदेवत्रिपाठी साहित्याचार्यः

## उपकृति-स्मृतिः



दाधीचैर्भिल्लवाडाख्यकनगरवरं संवसद्भिः सुमान्यैः ,
सद्विज्ञैः प्राड्विवाकै र्गुरुवरचरणे सन्ततं भक्तिभाग्भिः ।
श्रीमन्नारायणाख्यैः प्रणययुतधियाऽस्याः कृतेर्मुद्रणार्थं,
मुद्रा दत्तास्तदर्थं ह्युपकृतिमनिशं स्वीकरोत्यत्र ‘रुद्रः”॥१॥

॥ श्रीगुरुचरण कमलेभ्यो नमः ॥

—सचित्रं—

# प-त्र-दू-त-म्

[ खण्ड–काव्यम् ]



कवयिता—

ज्योतिर्वित् पं. रमाकान्तशर्म-तनूजः
शास्त्री पं. रुद्रदेवत्रिपाठी साहित्याचार्यः
काव्य-पुराण-तीर्थः, साहित्यालङ्कारः
हिन्दी साहित्यरत्नम्





द्वितीयं परिवर्द्धितं संस्करणम्
वि. सं. २०१२
कार्तिकी अमावास्या

विद्वद्भ्योऽन्तेवासिभ्यश्च
निर्मूल्यम्

प्रकाशकः पुस्तकप्राप्तिसङ्केतश्च
पं. भीमदेव त्रिपाठी
"मृडानी-मन्दिर"
श्रीमहेश्वर प्रिंटिंग प्रेस
मन्दसौर ( मध्यभारत )


सर्व-साधारणेभ्यो मूल्यमष्टाणकम्
प्रथमावृत्तिः ५००
द्वितीयावृत्तिः ११००

निर्मूल्यमभीप्सुभिः पुस्तकप्राप्तये पत्रालयीय-द्व्याणकत्रिकटं स्वसङ्केतसूचनपुरस्सरं प्रेष्यम्।

मुद्रकः—
श्रीमहेश्वर–मुद्रण–यन्त्रालयः,
मन्दसौर ( मध्यभारत )

# विषयानुक्रमः

---



---

# -: समर्पणम् :-



आस्ये यस्य विधातृजा विजयदा देवी नरीनृत्यते,
मर्मज्ञा रसना सदैव लपने लालायिता सत्स्तुतेः ।
भव्या भव्यकरा भरा भगवती भव्याय सम्भाव्यते,
तच्छ्री'कृष्ण'गुरोः करेऽतिविमले 'रुद्र' कृतिं प्रार्पये ॥

चरणेन्दीवरेन्दिन्दिरो—

—रुद्रः



अनन्त-श्रीविभूषित-
पूज्यपाद-स्वामि श्री कृष्णानन्द तीर्थ महाभागाः ।



महामहिम—

ज्योतिर्वित् पं. श्रीकृष्णलालशर्म महोदयाः ।

( सम्प्रति–स्वामि श्री कृष्णानन्द तीर्थ महाभागाः )



कवेः पितृवराः—

ज्योतिर्वित् पं. श्रीरमाकान्तशर्म महोदयाः ।

( अध्यक्षाः—श्री महेश्वरमुद्रण-यन्त्रालयस्य )



इयं सर्वदेच्छाऽस्ति चित्ते नवीना,
भवेन्मे मतिः श्रीगुरोः पादलीना ।

'रुद्रः'

# आमुखम्

अये काव्यकुसुमरसमाधुरीमधुपाः !

सदाभिनवभावनार्थमुत्कलिकाकुलमनसामास्वादितप्राचीनार्वाचीनानेककविकुलकविताकमलिनीरसानां सरससहृदयानाम्भवताम्पुरत इदमभिनवं "पत्रदूता"भिधं खण्डकाव्यमुपायनीकुर्वतो मे हृदयममन्दानन्दमनुविन्दन्ते ।

कवितायाः उद्गमस्थानं हृदयमिति, तत्र स्थितमेव कमलमलौकिकज्ञानरविभासा प्रस्फुटितं सौरभरूपेण कवितां प्रकाशयतीति प्रसिद्धिर्भावकानाम् । तत एव सहृदयैरेव कविताऽऽस्वादः समासादनीय इति प्रसिद्धिः । अपरिज्ञातसरसिजसौरभविशेषो हि मधुकरोऽन्येष्वेवापातप्रतीयमानाधिकसौन्दर्येषु कुसुमेषु रज्यति, नानुसरति कमलवनं, न चासौ विविनक्ति कुसुमान्तरपरिमलेभ्योऽस्य परिमले वैशिष्ट्यमिति । एवमसहृदयोऽपि तां हृदयवाचं नहि नहि, हृत्कमलपरिमलं तत्, न परिचेतुमलम् । अत एव कवित्वादपि भावकत्वं दुर्लभमिति कविसरणिकुशलाः प्रतिजानते ।

परं भावकः कवीभवितुं शक्नोति । अस्ति च भावकानां क्रमशः कवीभवने बहुतरमुदाहरणम् । तेष्वेवैकोऽयमेतत्काव्यकविरपि पदं धत्ते । यथाऽस्य जीवनवृत्तमवगतं तथा ज्ञायते यदयमपि बाल्यादेव काव्यरसास्वादलोलुपः स्वभावत एव तेषु रज्यते स्म । तद्-

भावनाभावितात्मनश्चास्य प्रसृता तत एव कालात् कविवर्त्मनि मतिः। तत एव स्वल्प एव वयस्येनेन कतिपयानि काव्यानि नव्यपदवीमनुसृतानि लोकरुचिकराणि निबद्धानि प्रसिद्धानि च "विनोदिनी," "प्रेरणा" "गायत्री-लहरी"त्यादि नामभिः ।

एतच्च "पत्रदूतं" खण्डकाव्यं स्वगुरुचरणसेवामभिलष्याऽनेन लिखितम्भावनामयम् । इयं दूतकाव्यपरिपाट्यादितो भावनामय्येवाविर्भूता कविकुलगुरोः कालिदासात् । तन्निर्मितकाव्यस्य मेघदूताभिधस्य जनमानसवशीकारितामाकलय्यैव बहवः कवयस्तन्मार्गं समस्यापूर्त्यादिविविधरीतिभिरनुगताः । विरचितानि च बहूनि-दूतकाव्यानि । तानि च यथायथं स्वकीयं स्थानं काव्यपङ्क्तावासादयन्त्येव ।

ईदृशानि काव्यानि प्रायो रतिभावप्रधानानि भवन्ति । तत्र सा रतिः क्वचिद् रसताम्प्रतिपद्यते, क्वचिच्च भावतामेवाश्रयति । इह च कविना स्वगुरुविषया रतिर्या किल—"दूरस्थः स स्थितिपरवशः (१५) इति पद्येऽङ्कुरिता सा "तस्यां कुट्यां जनपरिवृता" नित्यादिभिः (१३४) समाप्तिं यावत् निपुणं परिपोषिता भावपदवीमानीता च।

एतत् काव्यवर्णनीयानां कविगुरुमहात्मनां परिचयविषये किंचिदिव लिख्यते पाठकानामानन्दायाश्चर्याय वा । एते गुर्जरगौड़विप्रकुलालंकाराः शाण्डिल्यगोत्रीया प्रकृत्याः मनोरमे राजस्थान प्रदेशीयप्रतापगढनाम्नि ग्रामे ज्योतिर्वित् पं. श्रीनाथुलालशर्मतनुजाः काशीदेवीगर्भलब्धावताराः ( वि.सं. १९५०तमे ) श्रीकृष्णलालनाम्ना

ख्याताः । बाल्य एव प्राप्तब्राह्मणोचितसकलसंस्कारा आवश्यकान् वेद-व्याकरणादिविषयानधिगत्य ज्योतिःशास्त्रे लब्धगाम्भीर्याः श्रौतस्मार्तकर्मानुष्ठानपराः, गार्हस्थ्ये वर्तमाना अपि विदेह इवा — पगतसांसारिकविषयवासनाः, लक्ष्मीविलाससदने मोहमयीनगर एव लक्षावधिद्रविणं विद्याबलेन समर्ज्य स्वेष्टदेव्याः प्रसादाय तदाज्ञयैव वा सर्वस्वमर्थिसात्कृत्य, ततः प्रस्थिताः मन्दसौरं स्वचरितेन कृतार्थयितुं । तत्रापिचालौकिककृतिभिः सर्वतः प्रसिद्धाः, बहुवारमखण्डमन्नसत्रं यथाऽऽगतानियमितसंख्यकविप्रपरितोषपूर्वकमनेकान मासान् व्यत्याप्यातिदुर्लभान्नेऽपि समये विस्मयनीयतां प्राप्ताः, सकललोकस्य । कतिवारं च सर्वस्वदानेन सहस्रशो ब्राह्मणाः सत्कृताः, अचिरातीतसमये मार्गशीर्षकृष्णप्रतिपद्द्वितीयातृतीयातिथिषु सार्धैकमासावधिजलत्यागमौनग्रहणपूर्वकं चतुर्विंशतिसहस्रमुद्रामितं द्रव्यमर्थिभ्यो वितीर्णमेभिः । विक्रमसंवत्सरत १९९६ माघशुक्ला २ तः इमे गृहीतप्रव्रज्याः स्वामिकृष्णानन्दतीर्थनाम्ना विख्याताः परमे तपसि लीना दिग्वाससो लोकानध्यात्मविषयोपदेशैरुपकुर्वन्तः समयमतिवाहयन्ति ।

अयञ्च कविस्तेषां कनिष्ठस्य भ्रातुः पण्डितश्रीरमाकान्तशर्मत्रिपाठिनां ज्योतिर्विद्वरेण्यानामात्मजस्तैर्बाल्यादेव स्वसुताधिकस्नेहेन वीक्षितः शिक्षितश्च प्रथमं प्राचीनपरिपाट्याऽल्पेनैव कालेनाप्तवान् प्रबोधं संस्कृतसाहित्ये । ततः परीक्षाक्रमेण व्याकरणावश्यकग्रन्थानधीत्य साहित्यविषये लब्धाचार्यपदः काव्यपुराणादिविषये च लब्धतीर्थपदवीकः संस्कृत-हिन्दी-भाषाद्वयकविताकृतिनिपुणोनेकशः संस्कृत-हिन्दीसाहित्यसम्मेलनेषु सबहुमानं पुरस्कृतः स्वगुरूणामत्युत्तमां भक्तिं हृदि धारयन् सम्प्रति मोहमयीमेव वसति ।

कविश्चायं कीदृशः कीदृशश्चास्यैतत्काव्यमिति कथनमनावश्यकमेव सति पुरतःस्थापिते काव्ये ! यतो 'नहि कस्तूरिकामोदः शपथेन विभाव्यते' गुणग्राहका भवन्त एवात्र विषये नियुक्ताः स्वभावतः ।

केवलमेतावदेव वक्तव्यं यदस्य गुणानास्वाद्यवाच्यमतां विहाय सहृदयगोष्ठ्यां प्रकाशयन्तः समुत्साहयिष्यन्ति कविमेनमतोऽपिसुललितं काव्यान्तरमुपायनीकर्तुमिति किमधिकेनेति शम ।

| | |
|---|---|
| प्रधानाध्यापकः— | भवताम्भावकः |
| संस्कृतमहाविद्यालयः | पं० विश्वम्भर झा शर्मा |
| मोहमयी | व्याकरण-साहित्य-वेदान्ताचार्यः |

# आगसां परिमार्जनम्

अये परमदयालवो गुरुवरचरणाः !

आसीत्सोऽपि समयः, पंचवर्षदेशीयोऽहमभवं । इतस्ततः क्रीडासक्तं पठने चाननुरक्तं विरक्तमिवाशनवसनयोरप्यनासक्तं नक्तन्दिवं व्यक्तं मामालोक्य पितरौ स्नेहसिक्तमपि पठनातिरिक्तं निखिलमपि जीवनं विविक्तं जानानौ प्राथमिकशालायां प्रविवेशयिषू निरचायिषतां पाठनाय । किन्तु सकललोकलाल्यं बाल्यं च मे विचिन्त्य सहपाठिना विना कथमयं गमनागमनं विधास्यतीति चिन्तासन्तानवितानैकतान्तैः पितृपादैः परिवार-पारावारेऽत्तिनिक्षेपं कृत्वा सहसैव समासादितः समवयस्कोऽपि साधुवर्चस्कः प्रावीण्यप्राप्तयशस्कः श्रीमदनलालाभिधो मातुलः । तज्जनकावपि गृहारब्धप्राथमिकाध्ययनौ शालाप्रेषणैषणावास्तामेव ।

कार्तान्तिककोटिकोटीरैः पूज्यपितृवरैः स्वयमेव मङ्गलं मुहूर्तं वीक्ष्य "विद्यारम्भे गुरुः श्रेष्ठः" इति चावधार्य तद्दिने प्रत्यूष एव विनिवर्तितसन्ध्यादिकर्मभिः कृष्णपाषाणपट्टिका-लेखिनीयुतौ क्षालितहस्तपादावावामाकारितौ । शुभशकुनपूर्वकं पूर्वं गिरिजा-गणेश सोमनाथं भगवन्तं भोलानाथं वन्दयित्वा श्रीगणेशशृङ्गाटके च विघ्नध्वान्तविध्वंसनपटीयसश्चरणौ प्रणमय्य निकषैव एकतो द्रव्यरक्षणाऽऽगारिकासनाऽऽसीनां "वाचमर्थोऽनुधावती" ति किंवदन्तीं सत्यापयन्तीं शालां प्रत्यनयन् ।

तत्र च दूरत एव अध्ययनशीलानां बालानां करुणविरावैः करालामपि भूषितपट्टुबद्धमरालां निम्नकोटिकाध्ययनशालामपि विशालामुन्नतभालां निश्चितकालां बालशालामालोक्य प्रथम—सोपानारोहणकाल एव साश्रु नेत्रौ प्रस्खलच्चरणौ सगद्गदौ नैत्र नैव पितः! नैव नैत्रावुत्त ! नाहं पठिष्यामि नाहं पठिष्यामीति प्रत्येकं प्रलपन्तौ सकरुणमपि सारुणनेत्रबिभीषिकया भीतभीतौ चकितचकितौ यथायथं प्रापितावुपशिक्षकं । समसामयिकानेक-क्रीडाङ्गणरिङ्गणसुहृद्-दर्शनोपलब्धधैर्यौ समुत्पन्नसाहसौ कथङ्कथमपि प्रारभ्याध्ययनं पुत्र-वत्सलाया जनन्याः कियत्कालिकाङ्कविरहमसहमानावपि वर्णमातृ-काक्रोडमासादितवन्तौ ।

यथापूर्वं समचीचलत् कालचक्रम् । मन्दमतिरहं क्रीडापर-वशतया प्रथमायामेव कक्षायां प्रापमसाफल्यम् । मातुलस्तु मातुलता-तुलाधिरूढः सार्थकीचकार जन्मसिद्धं ज्यायस्त्वम् । कालबलात्तत्र पूज्याः श्रीशितिकण्ठशास्त्रिमहाभागा देवगवीसंरक्षणदक्षाः शालाति-रिक्तसमये सुरसरस्वतीमध्यापयामासुः । तत्रापि प्रेपितोऽहं पठनाय । काठिन्येन कण्ठस्थीकृतं कुण्ठितप्रज्ञेन मया कियत्सुचिद्दिनेषु पुष्प-दन्तीय–शिवमहिम्नस्तोत्रस्य केवलं पद्यमेकं "हरिस्ते साहस्र" मिति। अस्मात्प्रागध्यापितं "रथक्षोणीयन्ता" इति पद्यन्तु नाशकन्धारयितुं स्मृतौ । अतएव भूरिभर्त्सनाभारजर्जरितोऽपि निर्जरसरस्वतीपठन-तर्जनं विचारमेवार्जयन्मनसि ।

परं "यच्चिन्तितं तदिह दूरतरं प्रयाति" इतिवदायातः स कालः येन हठाद्धिन्दीशालावियोगोऽभूत् पुनरपि संस्कृतवाच आचमनं मञ्जूरीकृतम्। भवतामज्ञयैव श्रीमत्प्रचालितशालायां पाणिनीयाष्टाध्याय्याः प्रत्यहं सूत्र-वार्तिक-परिभाषा-धातुपाठादीनां रटनं, पठनं पारायणकरणं चेदमेव शरणमिति निश्चित्य मास-षट्केषु लघुकौमुद्या अध्ययनं, ततः सिद्धान्तकौमुद्या भ्वादिगणारम्भः, सहैवच वेद-ज्योतिष-कोश कर्मकाण्डादीनामपि पठनमिति कृत्वा बहूनां पुस्तकानां स्कन्धोपरि भारमूढ्वा गमनागमनमितस्ततोऽकरवं। एवं वेषं वीक्ष्य च मां जल्पता दर्शकानांश्रये ! आलोक्यतां प्रारम्भपठन-समय एव पुस्तकभारोद्वहनात्तमत्वमेतस्य—अग्रे च का गतिरिति सव्यङ्ग्यपरिहासवचांसि भृशमरुन्तुदान्येवाभूवन्।

तथा सत्यप्येवं तदेव मे मान्द्यं, सैव स्थितिः, तदेव क्रीडनौत्सुक्यम्, यदा कदा प्रपलाय्य महज्जलकूपे कूर्दनं, तत्रापि।

"मृतो वा प्राप्स्यसि स्वर्गं स्नात्वा वा भोक्ष्यसे सुखम्।
तस्मात् कूर्दस्व भो छात्र ! स्नानाय कृतनिश्चयः"॥

इति भगवद्गीतोक्तिवैपरीत्येन सन्तुष्टोऽसह्यताडनातडितमपि अन्धवन्नापश्यम्, कोपकुत्सनकर्कशफूत्कृतिमपि जडवन्नान्वभवम्, भीषणदण्डदानहुंकृतिमपि बधिरवन्नाश्रौषम्, बहुधा बोधितोऽपि न गमिष्यामीत्युत्तरयन्नपि स्वप्रतिज्ञातं नापीपलम्। अथ च प्रीत्याऽपि कतिधा नोपदिष्टोऽहं श्रीमदनलालकेशवदत्तादिसहाध्यायिनां दृष्टान्तदानेनेति हन्त !

कालःकलयति सकलमपि कलनीयं, फलयति फलनीयं परिवर्तितं पार्श्वं दिष्टेन । श्रीमन्तोऽपि सन्न्यासः श्रेयानिति विविच्य गार्हस्थ्यं तत्यजुः । सहपाठिनोऽपि विहगा इव विटपाद्विटपंययुः । अहमपिपिपठिषुर्नियतिनियामकनियन्त्रितो नियतमभ्रममितस्ततः कदाचिदिन्दूरं, कदापि नाथद्वारं, वाराणसीं, मोहमयीं च । ज्ञान-भिक्षुक इव गुरुजनचरणोपास्तिहीनो दीनोऽज्ञानलीनो वृथाऽभिमान-पीनोऽपि परेशानुकम्पया भवतामाशीर्भिश्च यथाकथंचिदपारयं "साहित्याचार्य" परीक्षापारावारम् ।

अधुना ज्ञानलवशलाकया स्वल्पोद्घाटितनेत्रोऽहं पश्यामि सर्वत्रात्मानमेव दोषदोषादूषितम् । नचावगच्छामि कैर्वा वाचो विलासैः प्रसादयामितमाम ? अत एव प्रस्खलन्तीभि र्गीर्भिःशिशुरिव कृतागसां परिमार्जनायाभ्यर्थयन्नकल्वनं प्रजल्पन्नघिचरणं पतितोऽस्मि निष्किञ्चने मयि कृपयन्तु इति ।

चरणचञ्चरीको
"रुद्र"

**पुनश्च—**

काव्यस्यास्य संशोधन-मुद्रण-प्रकाशनादिकर्मसु प्रत्यक्षाप्रत्यक्ष-सहयोगप्रदायकानामन्याभिभावकानां च भृशमुपकृतिं वहामि.

## ॥ श्रीकृष्णानन्दाष्टकम् ॥

१

तीर्थं तीर्थयुतं सुतीर्थमहितं सत्तीर्थविश्राणकम्,
तीर्थोपाधियुतं सदा बुधवरं तीर्थादिकार्ये रतम् ।
शान्तं शान्तिकरं सुशान्तमनुजैस्तं पूजकैःपूजितं,
कृष्णानन्दगुरुं सुदिव्यममलं भक्त्या नमामो वयम् । *

२

दोर्दण्डेऽखिलदण्डिनां द्युतिकरो दण्डो हि विभ्राजते,
दुष्टानां किल दर्पमर्दनविधौ योऽखण्डदण्डप्रदः ।
तं दण्डीश्वरमण्डली-सपरिधौ सम्मण्डनं पण्डितं,
कृष्णानन्दगुरुं सुदिव्यममलं भक्त्या नमामो वयम् ॥

३

यो विज्ञानविचक्षणः सहृदयो विद्वज्जनानन्ददो,
यं विज्ञाः पृथिवीसुराश्च नितरां सम्यक् श्रयन्ते मुदा ।
येनाऽदायि सुबोध आगतवते श्रेयस्करश्चारु तं,
कृष्णानन्दगुरुं सुदिव्यममलं भक्त्या नमामो वयम् ॥

४

यस्मै भक्तगणो हृदा प्रतिदिनं शस्ताय सङ्कल्पते,
यस्माद् भक्तजनोऽनिशं स्वसदने ह्यानन्दमालम्बते ।
यस्यार्चाकरणाय पण्डितवरा लालायिताः सन्ति तं,
कृष्णानन्दगुरुं सुदिव्यममलं भक्त्या नमामो वयम् ॥

---

* अस्मिन् पद्ये व्यवहृत-तीर्थ-शब्दानां क्रमशोऽर्थो । एवमनुसन्धेयाः।-१ तीर्थस्वरूपिणं, २ विविधसम्पत्ति-शालिनं, ३ मन्त्रि-पुरोहितादिभिः पूजितं, ४ ब्राह्मणेभ्यो दातारं ५ तीर्थ-पद विभूषितं, ६ यज्ञादिकरणे रतामिति ।

५

यस्मिञ्जीवति जीवनश्च बहवः सम्प्राप्तवन्तोऽधना,
यस्मात् प्रत्यहमेति विश्वजननी निर्भारतां भारती ।
तं विज्ञानधनं सुयोगिषु वरं धन्यं धरानिर्जरं,
कृष्णानन्दगुरुं सुदिव्यममलं भक्त्या नमामो वयम् ॥

६

सर्वान् स्वीय-समज्ञयैव विनतान् कुर्वन्तमारादरं,
सर्वेषां हृदि बोधदानकिरणैर्देदीप्यमानं त्विषा ।
सर्वाशा-परिपूरकं शुभगुणैराराधितं तं जनैः,
कृष्णानन्दगुरुं सुदिव्यममलं भक्त्या नमामो वयम् ॥

७

वेदान्तादिकला-कलाप-कलितं काशीशसंसेवकं,
ज्योतिःशास्त्रधुरंधरं यतिवरं विद्यापयोधिं परम् ।
तं गोत्रासुरसेवितं द्विजवरं गीर्वाणवाणीप्रियं,
कृष्णानन्दगुरुं सुदिव्यममलं भक्त्या नमामो वयम् ॥

८

दैवज्ञं विजितेन्द्रियं निजगुणैः सिञ्चन्तमूर्वीसुरान् ,
नानाशास्त्रविचक्षणं भुवि सदा विप्रोद्धृतौ तत्परम् ।
सत्यं कल्पतरूपमं गुरुवरं त्यक्ताम्बरं तं मुदा
कृष्णानन्दगुरुं सुदिव्यममलं भक्त्या नमामो वयम् ॥

९

कृष्णानन्दाष्टकमिदं, रुद्रदेवेन निर्मितम् ।
गुम्फितं भावपुष्पेभ्यः प्रीतयेऽस्तु गुरोः सदा

## श्रीगुरुगुणस्तुतिगर्भितं चित्रबन्धाष्टकम् ।

१

श्रीमान् धीमान् नृमान्यः सकल-कवि-कला-संयुतो युक्ति-युक्तो,
ज्ञानी ध्यानी मुनीनां स्तुतिनुतिततिभिर्भासितः सिद्धिसिद्धः ।
दान्तः शान्तः स्वतन्त्रः समविमलमतिः क्षेमदो मर्त्यमध्ये,
श्रीकृष्णः कृच्छ्रकृत्यो जयति यतियशाः सेवितो विश्वविज्ञैः ॥

२ [ मालाबन्धः ]

विश्वस्मिन् जनताजनार्दनहितं यः सर्वदा चेष्टते,
विज्ञान् मानितसज्जनांश्च निरतं यत्नेन यः सेवते ।
वित्तं स्वं निखिलं जगद्धितकृते यः सर्वदाऽपेक्षते,
विज्ञः कृष्णगुरुर्जयत्यविरतं यत्तः सुखं भारते ॥

[ 'विजयते' पदांकितो मणिहारबन्धः ]

३

सम्मान्यैर्जगतीसुरैः सुविदितैः पोपूज्यमानं मुदा,
सर्वेषां क्षितिवासिनां सुविदुषां क्षेमङ्करं सर्वदा ।
कृष्णानन्दगुरुं नमामि विविधैः सत्सेवकैः सेवि-
तं देवी-समुपासकं सुकृतिनं दानादि-दाने रतम् ॥

[ अष्टारश्चक्रबन्धः कमलबन्धश्च ]

४

यत्कीर्तिगीतिमभितो जगति स्तुवन्ति,
यत्तो यतिस्मृतिरतिस्मृतितां गताऽऽस्ते ।
तेऽस्ताघतापततयो यतयोऽत्र नित्यं,
सत्यं जयन्ति भुवने किल कृष्णतीर्थाः ॥

[ श्रीबन्धः ]

( ५ )

सकल-रिष्टहरं   सम-रिष्टदं,
सकल-काव्य-कलाप धुरन्धरम् ।
सकल-तीर्थयुतं   सुखदं गुरुं,
वयमहो ! विनता विनताः स्म तम् ॥
[ ओङ्कारबन्धः ]

( ६ )

नमत बुधजना गुरूत्तमं,
सकल-सुखप्रदमेकमुत्तमम् ।
भजत भुवि तमेव वित्तमं,
सकलतमोहृतयेऽपि सत्तमम् ।'
[ मङ्गलकलशबन्धः ]

( ७ )

श्रीकृष्णः कृतिकृद्धीरः, सद्विद्यो विधिविद् वरः ।
सद्यज्ञयन्ता यतिराट्, शिवदोऽवतु वः सुराट् ॥
[ वृत्तबन्धः ]

[ ८ ]

मतिदं गतिदं, स्थितिदं सुखदम् ।
शिवदं वरदं, प्रणतोस्मि गुरुम् ॥
[ षट्दलकमलबन्धः ]

( ९ )

सुचित्र-बन्धबन्धुरं, गुरोरिदं शुभाष्टकम् ।
शुभाय 'रुद्र' निर्मितं, भवेत् सदा सतां कृते ॥

॥ ॐ नमः शिवाय ॥

# प-त्र-दू-त-म् ।

## ( खण्डकाव्यम् )



( मन्दाक्रान्ता-वृत्तबद्धम् )

अह्न्ये कस्मिन् पशुपतिमुमा प्राह नित्यं दिनान्ते,
भङ्गां पीत्वा नटसि डमरुं वादयन् कृत्तिवासः !
हेरम्बोऽयं स्मृतिपथगतां नामवस्थामवाप्तः ,
प्रायो रात्रौ भवति चकितः सेयमुक्तिः सदाऽव्यात् ॥

२

श्रीगङ्गायाः प्रवहणरयादुत्थितान् फेनभङ्गान् ,
नेत्रप्रान्तादनलशिखया मुच्यमानान् स्फुलिङ्गान् ।
दृष्ट्वा यातौ भुजगशशिनौ यस्य मौलौ प्रकम्पं ,
भूयो भूयः स मम भवताद् भूतये भूतनाथः ॥

३

स्थित्वा रम्ये कमलनिलये वल्लकीमालिकल्पा-
मङ्के कृत्वा करलतिकया लालयन्तीं लयस्थाम् ।

तां भक्तानां मतिततितमोहारि-दीव्यत्प्रकाशां,
वन्दे देवीं धवलवसनां शारदां पारदात्रीम् ॥

४

स्वान्ते येषां वसति विमला श्रीगिरीशप्रियाया,
भक्तिः प्रौढा सकलसुखदा सत्कृता ब्राह्मणा यैः।
नत्वा तेषां विमलचरणौ सद्गुरूणां समीपे,
'रुद्रः' सज्जोऽस्म्यभिनवमिदं प्रेषितुं[1] 'पत्रदूतम्' ॥

५

यस्या गाथां गुणगणयुतां प्रेतमुख्याद्रिशस्य,
त्यक्त्वा गौरीं शशधरधरोऽप्यागतः सम्भ्रमेण।
पश्चाज्जातां कुपितकुपितां चण्डिकां वीक्ष्य लज्जा-
युक्तोऽवादीत् परिहर रुषं देवी! 'भूलेश्वरो'[2]ऽहम् ॥

६

तत्कोपस्य प्रशिशमयिषुः स्वालयाच्चापि रम्यं,
'मुम्बादेव्याः' शुचिरुचिकरं मन्दिरं चन्दिरं वै।
कासारेण श्रितमथ नवं कारयित्वा सहैव,
नाम्नाऽप्यस्याः सकलनगरीं घोषयामास शम्भुः ॥

---

(१) अयमन्तर्भावितण्यर्थः प्रयोगः।

(२) मोहमयीस्थ-प्रसिद्धशिवमन्दिरस्य एतदेव नाम, हिन्द्यां 'भूल' इत्यस्य विस्मृतिरित्यर्थस्तेन लभ्यीयं विस्मृतिर्यदयि देवि! त्वां विनात्रागतोऽस्मि। अहं तु ईश्वरोऽस्मि विस्मृतीनामतः क्षन्तव्य-मिति सूच्यते।

७

यस्याः कीर्तेः सुमधुर-रवं श्रोत्रपेयं विपञ्च्या,
जातो मुग्धः सरिदधिपतिर्वादयन्नित्यमेव ।
गायं गायं गुणगणकथाः प्रोच्छलद्भिस्तरङ्गै—
रात्मानन्द-प्रकटनपरः प्रत्यहं मोमुदीति ॥

८

लक्ष्म्या युक्तः फणधरकृतं तल्पमाश्रित्य सत्यं ,
पारावारे विहितशयनो वर्तते शार्ङ्गपाणिः ।
एषा व्यर्था भवति भणितिर्दर्शनात् किन्न यस्यां ,
लक्ष्मीनारायण-भगवतो माधवाराममध्ये[3] ॥

९

शय्येयं वा विलसतु यतो ह्लादिनीशेन सम्यक् ,
क्रोडीभूता निजतनयया संयुता शेषशय्या ।
उत्साहेन स्वतरलकरै-र्मन्दमान्दोलयित्वा ,
तीरप्रान्ते कथमपि मुदाऽऽनीय संस्थापिता स्यात् ॥

१०

यत्रायातः सह गिरिजया चन्द्रमौलिस्त्रिनेत्रो ,
लक्ष्मीनाथः सह कमलया पूर्वतः संस्थितश्च ।
यत्रायाताः सपदि विबुधा देवलोकं विसृज्य ,
प्रायो भृङ्गाः सुरभितसुमेष्वेव नित्यं वसन्ति ॥

११

आसीत् स्वर्गे गगनगमनं पुष्पकाख्यं विमानं ,
तेनैवासन् सुरवरगणाः सन्ततं साभिमानाः ।

(३) 'माधव बाग' इति स्थानस्य नामैतत् ।

दृष्ट्वा पश्चात् पवन-चपला-धूम-वाष्पादिनाना—
यानाम्यन्यान्यपि च सहसा यत्र जाता विमाना: ॥

१२

स्वर्गे सौख्यं यदिह भुवि तन्नास्ति तं लोकवादं,
मिथ्याकर्तुं कृतदृढविच राणि सद्मानि यस्याम् ।
उच्चैरुच्चैः स्वशिखर--करैराह्वयन्ति द्युलोकं,
भूयो भूयोऽहमहमिकया तर्जयन्तीव वाग्भिः ॥

१३

तीरे यस्याः प्रथितविभवे 'जूहु-चौपाटि'-संज्ञे,
स्थाने यत्र प्रतिरविदिनं सम्मिलन्मेलकेषु ।
प्रायो नार्यः प्रणयिसहिता 'मण्डकान् भेलपूरीः'[4]
खादं खादं 'खिलखिलखिलं' संहसन्त्यो भ्रमन्ति ।

१४

मुम्बापुर्यां अभिनवगुणाकृष्टचेता हि तस्यां,
रुद्रोऽवात्सीन्मुदितमनसा मन्दिरे मातुलानाम्[5] ।
काले कस्मिंश्चिदपि सहसा वर्धनं वीक्ष्य सिन्धोः,
पूर्णातिथ्याः[6] स्मरणमकरोच्छ्रीगुरोः पूजनस्य ॥

१५

दूरस्थः स स्थितिपरवशः किं विधेयं न किं वा,
कार्या पूजा कथमनु सुगुरोश्चिन्तयन्नित्थमेव ।

(४) 'भेलपूरी'ति तत्रत्यं प्रसिद्धं खाद्यम् ।
(५) श्रीगोविन्दरामशर्मणां कवेर्मातुलगृहे ।
(६) गुरुपूर्णिमाया इति ।

मार्गे यान्तं दलवितरकं प्रापकं मार्गयन्तं ,
दृष्ट्वा चित्ते भृशमुपगतोऽलभ्यलाभेन तुष्टिम् ।

१६–१७

एकं मित्रं विलसति यतो भूतले निर्धनानां ,
दूतञ्चैकं प्रकृति-मधुरं सौख्यदं पत्रमेव ।
एतच्चाल्पव्ययमनुचरं स्पष्टवाद्यप्रमादि—
प्रीतेः पात्रं चरणरहितं शीघ्रगं दूरयायि ॥

एतेनैव स्मृतिपथगता जायते पूर्वगाथा ,
कल्पारम्भे प्रथममभवत् सर्जनञ्चैतदीयम् ।
एतस्यास्तेऽस्मदुपरि कृपा यद्वयञ्जीविताः स्मः ,
तत्स्वान्तेनाप्युचितसमये सम्मतिः स्वा प्रदत्ता ॥

[ युग्मकम् ]

१८

निश्चित्यैवं दलनिलयतः पत्रमानीय तस्मै ,
जातोत्साहो नमनमकरोत् स्वागतेनाथ युक्तम् ।
आसीद् यद्वै हृदयनिहितं कार्यमावेदनीयं ,
सोऽयं प्राप्तावसर उपदीकर्तुमित्थं बभाषे ॥

१९

रे रे पत्र ! त्वमसि नितरां सौख्यदं मानवेभ्यः ,
के वा भूमाविह तव नराः सन्ति नो दर्शनोत्काः ?
लब्ध्वाऽऽनन्दं श्रयति च यथा चातकः स्वातिबिन्दुं ,
तद्वन्मोदं प्रियसख ! तवालोकनात् संश्रयेऽहम् ॥

२०

यद्यप्येतन्नहि रुचिसहं यत् समेतस्य गेहे ,
कार्ये कस्मिंश्चिदपि सहसा योजनं, धार्ष्ट्यमेतत् ।
किन्तु त्वादृक् प्रियजनमनोमोद-सम्पादकं यत् ,
कार्यात् स्वीयान्नहि विचलितं कर्हिचिज्जायते वै ॥

२१

सन्देशानां कुशलवहनाः सन्ति दूताः परेऽपि ,
नाहं मन्ये वरमिह परन्तेषु धन्यं विना त्वाम् ।
प्राच्यं वृत्तं युगयुगभवं श्रावितं यत्त्वयैव ,
स्वीकार्याऽतो मम लघुतमा प्रार्थना पत्रमित्र ! ॥

२२

यातव्यन्ते वर ! दशपुरं मन्दसोरापराख्यं ,
यत्र श्रीमान् कविकुलगुरुः कालिदासो बभूव ।
प्राचीनत्वात् सुविदितयशो मालवस्याङ्गभूतं ,
ख्यातं शास्त्रेष्वपि रुचिकरं वर्णनं यस्य भाति ॥

२३

जित्वा हूणान् सपदि समरे श्रीयशोधर्मनेता ,
कीर्तिस्तम्भं विशदवपुषं स्थापयामास यत्र ।
हृद्यैः पद्यैः खचितमखिलं सत्कवेर्वत्सभट्टैः ,
किञ्च प्रीत्या ललितकलयोत्कीलितं वासुलेन* ।

२४

गत्वा तत्राभिनवतपसा भ्राजमानाः समन्ताद् ,
ब्रह्मानन्दे विधूतमनसो भूरि भाग्येन लभ्याः ।

---



* एतद्विषयेऽधिकं जिज्ञासुभिः उत्कीर्णलेखाञ्जलि स्वलोकनीयाः ।

यद्दोर्दण्डे विलसति सदा ब्रह्मदण्डः प्रचण्डः ,
सिद्धाः शुद्धाः सविधि गुरवस्ते दलालोकनीयाः ॥

२५

पन्थानन्तत् पृथुलनगरारण्य--सिन्धुप्रियाभि—
श्चित्रैर्दृश्यैरपि च रुचिरं त्वं मयोक्तं निशम्य ।
स्वीये चित्तेऽखिलमपि निधेह्येतदेवास्ति योग्यं ,
खेदं नो चेदृजुपथ--परिज्ञानहीना व्रजन्ति ॥

२६

स्मृत्वा रीतिं सततमुचितां लौकिकीं वा विदायं ,
दातुं तुभ्यं कतिपयपदैरागमिष्यामि साकम् ।
पश्चात् पत्रालयमुपगतं स्वागतीकृत्य भृत्या ,
अन्यैर्मित्रैः सह परिचयं कारयिष्यन्ति तत्र ॥

२७

'आस्ते कच्चित् कुशलमभितः श्रीमतां मित्रवर्या ?'
एवं पृष्ट्वा विरमय मनश्चिह्नदानावधि त्वम् ।
कष्टं मुद्राजनितमपि यत्तत् सहस्वाल्पकालं ,
कार्यार्थी नो गणयति यतो दुःखसौख्ये कदापि ॥

२८

मध्यस्थानं * यदिह रुचिरं वर्तते मोहमय्या ,
यस्माद्यानान्यपि च बहुशो यान्ति नीत्वा जनौघम् ।
आरोह्य त्वां सह दलकुलैर्वाष्पयाने निशाया—
मिष्टस्थानं गमयितुमये ! प्रेषयिष्यन्ति तत्र ॥

---

* बम्बई सेन्ट्रल इत्यस्य सूचकं मध्यस्थानमिति ।

२९

तत्रत्यं त्वं सहजसुषमा-चाकचक्यं विलक्ष्य ,
यातायातं द्रुतगतिमतां मानवानाञ्च भूयः ।
विद्युद्गन्त्र्या अपि च निरतं मानवौघेन पूर्णं ,
अध्ये वीदयागमनगमने मा गमः पत्र मोहम् ।

३०

एषा भूमिः प्रतिदिन वषः कालमारभ्य यावद्-
भूयो नैति ह्यपरदिवसस्तावदागन्तुकानाम् ॥
गन्त्रीणाञ्च प्रभवति सदाऽभूतपूर्वं सुदृश्यं ,
सम्पद्येते हसन-रुदने सङ्गमेनैव यस्याम् ॥

३१

कोऽयं कोलाहल इत इतः श्रूयते किं किमेतन् -
मञ्जूषा मे क्व च मदन ! तद्विष्टरं केन नीतम् ?
एह्येहि त्वं न हि कथमरे ! द्राक् शृणोष्यन्ध पश्य
ज्योत्स्नादृष्ट्या सपदि कृपयद्यानमेतत् समेति ॥

३२

ग्रामं ग्रामं परिजिगमिषून् यानि लान्ति त्यजन्ति,
यानानीतः ककुभमपरां प्रायशः संव्रजन्ति ।
तेष्वस्माकं हितकरमरं यत्समायाति नूनं ,
तेषामेतत् प्रणयि सहजं देहरादूनयानम् ॥

३३

आगच्छास्मिन् प्रविश हर रे ! यच्छ मह्यं करण्डं
तिष्ठात्र त्वं स्थलमिदमये ! वर्तते पूर्वरुद्धम् ।

माता याता क्व च तव सखे ! स्थापयाधः स्वपात्रं,
शाटी दीर्णा तव पिटकतः सा त्वभूद्देव जीर्णा ॥

३४

कस्मिन् स्थाने भवति गमनं श्रीमतां मित्रवर्या-
स्तत्रैवावामपि जिगमिषू स्वस्तदा तिष्ठतात्र ।
कस्मान्मह्यं वितरसि नहि त्वं यदुक्तं मयाऽऽसी—
दुच्चैः कोयं विवदति भृशं भारवाही स आस्ते ॥

३५

रिक्तं रिक्तं विशत सुहृदः शीघ्रमस्मिन् प्रकोष्ठे,
मिथ्या ब्रूषे किमिति सततं मूढ ! रिक्तं कुरु त्वम् ?
कस्मात् कस्मादधिकृतमिदं स्त्रीभ्य एवास्ति तस्मात्,
स्थेयं नान्यैरिति नियमतो दण्ड भाग् वामगःस्यात् ॥

३६

इत्थं वातावरणसरणिं वीक्ष्य काश्चिद्विचित्रां,
चित्तं मा त्वं विकलय यतस्तेऽस्ति कक्षः स्वतन्त्रः ।
कोणे तस्मिन् कथमु जनता पुञ्जिता वर्तते स्वि—
न्नीरं पातुं हिमनलिकया संस्थिता तत्र सर्वा ॥

३७

रे रे रामानुज ! भज निजं स्थानमाशु क्व याऽसि ?
कालादीनो विचरति मुधा नाधुना यः समेतः ।
नादं कृत्वा कथयति यतश्चालको गन्तुकामान
सज्जाः सन्तु प्रयतमनसा स्यन्दमश्चालयामि ॥

३८

पृष्ठे यावत् कुमुद ! हरितां दर्शयित्वा पताकां,
वादं वादं रुचिर-सुषिरं सूचयेद्रक्षको न,
तावच्छीघ्रं प्रविश मुदितः स्वीयकक्षं वचांसी-
त्येवं श्रुत्वा त्वमपि सुखदं प्राप्नुयाः स्वं प्रकोष्ठम् ॥

३९

हित्वा शङ्कां बहुतरजना यर्हि कुर्वन्त्यटाट्या-
मन्तः स्थित्वाऽहमिह हि पुनः किङ्करिष्यामि कोष्ठे ?
इत्थं चित्ते निजकृतिपटो ! मा भवेः संशयालु,
सर्वेऽप्येते त्विह जिगमिषूनागताः संविदातुम् ।

४०

आस्तां तावच्चलत चलत श्रूयतामग्निमोऽय —
ञ्जातो नादोऽवतरत जना ! आम् शिवाःसन्तुमार्गाः।
पत्रं देयं मम तु नमनं वाच्यमेवं ब्रुवाणा-
न्नेत्रप्रान्तैः सलिलकणिका मुञ्चतः सम्प्रपश्येः ॥

४१

कांश्चिद्धस्तस्थित-लघुपटान् वेपमानान् पुरस्ता-
दन्यान् मौनं नयनयुगलैः स्वा दशाः सूचयितॄन् ।
कांश्चित्पीडासहित-हृदयान् कम्पसङ्केत--कर्तॄन्,
प्रत्यक्त्वन्तच्छदन ! विदधत् त्वं सुखेन प्रयाहि ॥

४२

केचित् केषाञ्चिदपि विरलां साधु चर्चाञ्चरन्तः,
स्वीयस्थाने मुदितमनसः शान्तिमालम्बमानाः ।

अन्ये सुप्ताः कतिचन परे विष्टरादि-व्यवस्था—
ङ्कर्तुं व्यस्ताः कथमपि तदा सम्भविष्यन्ति युक्त्या ॥

४३

नादं श्रुत्वा प्रणयमसृणं मोदमेघावलीना—
मन्येषां वै हृदयविपिने भावनाख्या मयूर्यः ।
नीत्वाऽऽलम्बं नवनवलसत्कल्पनामञ्चभूमे—
र्नर्तं नर्तं वदनकमले व्यञ्जयिष्यन्ति सौख्यम् ॥

४४

आशानौका प्रलयमरुता वेल्लमाना बहूना—
मन्तःसिन्धौ स्मरणतरलै र्जिह्मगैस्तरङ्गैः ।
दुःखावर्ते प्रियविरहजे भूरि दीर्घे पतन्त्य-
प्यानेष्यन्ति प्रविरलगलद्बाष्पधारा निजाक्ष्णोः ॥

४५

मध्ये मार्गे लघुविरमणस्थान--सन्त्यागपूर्वं,
धावं धावं यदभिलषितं त्वादृषां तस्य पूर्त्यै ।
किञ्चित्कालं प्रथमविरतिस्थानमासाद्य तिष्ठे -
त्तावत् पश्येस्त्वमपि सततं दादरं सादरं तत् ॥

४६

एतस्यास्ति द्विविधमुपयोग्यत्वमत्रेक्षणीयं,
पूर्वं त्वेतद्यदिह बहुशः सन्त्यहो यानमार्गाः ।
यस्मिन् कस्मिंश्चिदपि नगरीभाग आवेष्टुकामै—
रालम्ब्यन्तेऽतुलसुखकरा निर्गमस्येच्छुभिश्च ॥

४७

अन्यच्चास्मादपि परमिदं वर्तते भाग्यमस्य—
श्लाघा योग्यं यदिदमनया रक्षितं कोटपालम् ।
येष्वेतस्य प्रभवति कृपा ते सदा सौख्यभाजो ,
नो चेद् दुःखानुभवविवशा बाह्य एवावसन्ति ॥

४८

तेषां हीनां स्थितिमभिलषेर्लोकितुं चेत्तदा त्वं ,
स्थित्वा वातायननिकटतः स्वाक्षिलक्ष्यीकुरुष्व ।
तत्रत्यं त्वं यदपि विषयं न त्रपायां प्रतीयाः ,
एष्यत्येव प्रिय ! तदपि तन्मानचित्रं पुरस्तात् ॥

४९

दृष्ट्वैतेषामुदजकटकस्योत्कटां कोटिमारा—
दाटीकेथा झटिति सुपटो ! टङ्कनं सङ्कटानाम् ।
रात्रीचेटी प्रकटयति या नाट्यमट्टालिकासु —
व्यालीवात्र त्वटति विकटा सैव घोट्टायितेन ॥

५०

सङ्कीर्णत्वादुदयति सदा ग्रीष्मता यत्र नित्यं ,
तेषां श्वासा अपि शिशिरिताः सन्तिदारिद्र्यवासात्
रोगैर्दीर्घैरपि कवलिता ये प्रजाधिक्यदोषा—
च्छोचं शोचं नयनयुगलैर्वर्षयन्त्यम्बुधाराः ॥

५१

यत्राजस्रं भवति युगपद् यत् त्रयाणामृतूना—
मेवं वासो जनयति न तत् कस्य चित्ते विषादम् ।

निश्चिन्वीथा हृदि परिचलद्यानसंस्थं विचिन्त्यो-
द्धर्तुं्श्चैतान् विपदि पतितानीश एवास्ति शक्तः ॥

५२

निश्चन्द्रेयं लसति विरला तारिकाऽऽलिस्तु कस्मा-
दम्भोदानां नभसि वितता जृम्भते यर्हि पंक्तिः ।
शङ्काभ्रङ्कारितनिजमनो दीपका वैद्युतास्ते,
सम्बोध्यैवं व्रज शुभ ! ततस्त्वं विरामं द्वितीयम् ॥

५३

बेसिन्मार्गोऽयमपि निगमो ध्यानदानार्ह आस्ते,
यस्मादेतत्परिसरगतं वर्तते सद्विरारम् ।
विद्युद्गन्त्र्यः किल चपलया चाल्यमाना अनेका,
गन्त्रागन्तृंस्तदवधि जनान् मोदयन्त्यो नयन्ति ॥

५४

केचिन्मैानं विशिशयिषवस्तल्पमल्पं गृहीत्वा,
यावद्विद्युद्व्यजनमरुता मोदमानाः शयीरन् ।
ईर्षाकृष्टैरिव कलकलैर्बोधयिष्यन्ति सुप्तां-
स्तावच्छीघ्रं कदलक-फलादित्सवस्तानिहैव ॥

५५

त्यक्त्वाऽऽयाता यदपि नगरीं वर्तते याऽखिलानां,
सद्वस्तूनां निधिरिव कथं तर्हि सोत्का इमेऽत्र ।
शाश्वत्येषाऽस्त्यधिजिगमिषा सम्भवा ते तु तस्मा-
देतज्ज्ञेयं व्रजति यदितस्तत्र मोचाफलौघः ॥

५६

अग्रे गच्छत् तिमिरनिकरं दारयन्मंक्षु यानं ,
छुक्छुक्छुक्छुक्छुगिति विरलं शब्दकाव्यं गृणानम् ।
लोकं स्वीयागमन-विषये सूचयत्तारनादै—
र्नैष्यत्येवं द्रुतमनलसं पालगेहं क्रमेण ॥

५७

मार्गे दाहान्वथ च बलसारं बिलीमोरसंज्ञं ,
पश्चादायास्यति च नवसार्याह्वया पूः सुरम्या ।
यन्नाम्नैव प्रविचलति नोऽद्यापि हृद्योपगोत्रं ,
रम्यामेतां तदिह विषये शुश्रुमः किंवदन्तीम् ॥

५८

एता वस्तुं कतिचिदपि ये गूर्जराख्येऽत्र देशे ,
गौडाः प्राक् ते द्विजवरगणा गूर्जरीया हि गौडाः ।
इत्याख्याता जगति विदितास्तेषु सम्भाव्यते यद् ,
येऽत्रावात्सुर्जगदुरथ तानेव नोसारियेति ॥

५९

निद्रामुद्रायुतजनगणं भूरि विस्माप्य मार्गे ,
गर्जं गर्जं नभसि सततं वारिवाहो निशायाम् ।
शम्पाकम्पा-श्रितकरवरैर्मन्दमावेद्य यर्हि ,
मुञ्चेदश्वत् पवननिवहं वाहयन्नम्बुधाराः ॥

६०

चित्रं चित्रं तव वर ! पुरो यत्समेयात्तदानीं ,
तस्मिन् काश्चिच्चकितचकितान्छीतभीतान् हिमेलून् ।

आच्छाद्य स्वं सुपटपटलैश्चारु मञ्चे प्रसुप्तान् ,
सङ्कोच्यान्यान् निजनिजतनुं कोणसंस्थान् प्रपश्येः॥

६१

मध्या रात्री यदपि विगता प्राणिनां वै तृतीयो ,
भागः सुप्तः स्वक-परिजनान् द्रव्यदारादिसर्वान् ।
विस्मृत्याहो ! तदपि कतिचिज्जीविकारुद्धनिद्राः,
कर्मात्मीयं करणशरणं मन्वते मौनमुद्राः ॥

६२

केचिद् यन्त्रालयमुपगता यन्त्रयन्त्येव यन्त्रा—
नन्ये मन्त्रालयनिलयिता मन्त्रयन्त्येव मन्त्रान् ।
केचित्तन्त्रालयनयजुषस्तन्त्रयन्त्येव तन्त्रा—
ञ्छेषेष्वेषाऽनिशमपि निशा शास्त्यहो ! किं स्वतन्त्रा ॥

६३

आस्तामेवं विचरति मनोभावनावाटिकायां ,
सूर्यद्रङ्गः प्रकटितनिजोत्सङ्गरङ्गान्तरङ्गः ।
चञ्चच्चन्द्रातपतलरुचा सूरतैः सूरतीयैः ,
पूर्णोऽभ्यर्णो तव तु भविता मित्र ! नेत्रातिथिः सः ॥

६४

तापीनद्यास्तटनिकटगो भूरि शोभाविशाल ,
शक्तो नक्तन्दिवमधनतावारणे चानुरक्तः ।
एतस्यापि प्रथितयशसां गन्धमाघ्राय सिन्धु—
र्बन्धुत्वं स्वं सह सरितया योजयँल्लोलुठीति ॥

६५

अन्नत्यां न स्मरति न जनो जातुचिद्दीर्घसूत्रीं,
न स्याद्भूयः कथमिह भृशं स स्वयं दीर्घसूत्री।
मिष्टान्नं वै रुचिरमितरद्यद्यपीहत्यमास्ते,
किन्तु प्रायो भवति जनता यूथकृत्यानुकर्त्री॥

६६–६७

'धावित्वा ते विविशुरथवा तत्र रुद्धा न जाने,'
कामप्येवं शुचि निपतितां 'मा शुचोऽग्रे विलोकयाः।
नो चेत् कृत्वाऽवतरणमरं तत्र तैरग्रकृत्यं,
प्रष्टव्यं स्वं स्थिरधिषणयाऽऽह्वानयन्त्रेण सर्वम्'
इत्थं पान्थः सरलवचसा सान्त्वयन्नुन्मनस्का—
मात्मीयत्वं दधदनुपदं बोधयिष्यत्यजस्रम्।
चालं चालं चलनचपलं यानमप्यात्मनीनं,
स्मृत्वा कृत्यं शुभमथ ततो नेष्यति त्वाऽक्लेशम्॥
[ युग्मकम् ]

६८

तत्रेशानां विनतशिरसा सादरं वन्दमानो,
रेवावीचिस्पृशमनुपमं पावनं वातमेतम्।
ज्ञात्वा सद्योऽवहितमनसा शर्वपुत्र्या स्वकीयं,
नामं नामं निखिलसुखदं मङ्गलं कामयेथाः॥

६९

ब्राह्मी वेलाऽप्यभवदधुना ह्यास्तिका वीतनिद्राः,
सन्तः शीघ्रं पणक्रमथत्राऽप्याणकं नर्मदायै।

आत्मीयां ते जनिसफलतामर्पयित्वा विदन्त,
इद्धा श्रद्धाभरितहृदयैरङ्ग! नंस्यन्ति मूर्ध्ना ॥

७०

'दिष्ट्या दृष्टिं चटुलयति यच्चाकचक्येन चञ्च-
न्नेदियस्तत् किमिति शिखरस्थं न जाने मनोज्ञम्।'
इत्थं चित्ते त्वयि विमृशति प्रत्यभिज्ञानपट्टो,
विश्रामस्थो भृगुपुरमिति व्यंदयति स्वाभिधानम् ॥

७१

शीघ्रं यात्राभृतकविहितोद्योगतः स्वस्थलेषु-
स्थास्नूनां त्वं बहुरसयुताः स्वार्थसिक्ता सुवाचः।
शृण्वत्माभातिकपचनतः स्वस्थचित्तेन सम्यक्
याया अग्रे प्रकृति सुषमाऽऽलोकनादप्यतृप्तम् ॥

७२

सन्त्यज्यैकादशलघुपुराण्याशु संवर्धमानं,
कल्ये पल्यंकिकजनगणं सत्वरं बोधयन्तः।
विक्रेतारो विदधति मुदा वन्दिवच्चाटुगीर्भि-
र्यत्र भ्रातर्जननि! भगिनीत्यादि सम्बोधनानि ॥

७३

'फाण्टं दुग्धं चिपिटकमिदं स्वादु सोलापुरीयं,
किं वा सद्यो रचितममलं नैकधा मिष्टमन्नम्।
प्रक्षाल्याद्धी रदनवदने प्रातराशाय किञ्चित्
खाद्यं स्वाद्यं नयत नयत प्रीतिपूर्वं यथेच्छम् ॥'

७४

उक्त्वा चैवं नवमधुरसा-नागरङ्गाम्रकादीन् ,
विक्रीणीयुः स्वकृतिनिरता यत्र विक्रेतृवर्याः ।
यस्मिंश्चेत्थंकुतुकनिवहो विभ्रमे मञ्जु नृत्ये—
ज्ञानीथास्तद् वर ! वटपुरं सूनुवन्मोहमय्याः ॥

७५

कीरैः कान्त किलिकिलिकृतं झंकृतञ्च द्विरेफै—
र्नीडस्थैर्वा चटकनिचयैश्चुंकृतं चारु हारि ।
मण्डूकैः कैश्चिदपि सरसां टंकृतं तीरसंस्थैः ,
कल्याः कल्ये कलकलमयीर्वाच आचामयाञ्चत् ॥

७६

मोदं मोदं प्रचलति पुनः पावकस्यन्दनस्थे ,
कान्ताराणां किमपि रुचिरं वृत्तमन्तर्निषण्णम् ।
लब्ध्वोद्बोधं किरणनिकरैरुन्मुखं चित्रमानो—
रात्मोदन्तं तव तु पुरतः स्थापयिष्यत्यनन्यम् ॥

७७

'स्थाणुर्यत्तं प्रकुपितदृशा भस्मशेषञ्चकारे—
त्येतेनैव व्यथितहृदयः प्रेतभूतः स कामः ।
तद्विद्वेषाद् य इह विपिने स्थाणवस्तेषु किं स्विद् ?
भ्रामं भ्रामं प्रभवति भृशं तत्प्रतीकारकांक्षी ॥

७८

नीहाराणां नवलकणिका मञ्जिकां शाद्वलीयां ,
कृत्वा मुक्तापटलजटितं सत्पटं तर्जयन्ति ।

लब्ध्वा हंहो ! ललितलतिकाः पल्लवैस्तालदानं ,
जोषं जोषं सुषमितसुमैस्तत्र कस्मै नटन्ति ? ॥

७९

के वाऽत्रत्या विमलमतयः शाश्वतं शासितारो ?
येषामेषा सभसुखकरी वर्तते सुप्रजाऽपि ।
नो जानीमो लसति भगवन्नन्तराले धरित्र्याः ,
केषामेषा कृतिरिति मतिं चिन्तने सन्तनुष्व ॥'

८०

तावत् त्यक्त्वा झगिति समलायादिसंज्ञं चतुष्कं,
विश्रामाणां, क्षिप निजदृशं गोधराया धरायाम् ।
यात्राकामा गमनमभितो ह्यास्तिका भारतीयाः ,
श्रद्धाबद्धा विदधति यतः केऽपि डाकोरनाथम् ॥

८१

नन्तव्यास्तेऽवनतशिरसा द्वारिकेशास्त्वयाऽपि ,
पश्चादग्रे स्वपथि चलता सन्तमार्गेण मित्र !
मध्ये ग्रामेयककुलवधूट्योऽम्बुकुम्भोम्भनोत्काः ,
काश्चित्कूपेष्वथ तदितरा दीर्घिकास्वीक्षणीयाः ॥

८२

दूरे दीनान् ससुखमयतः स्वस्वकेदारभागं ,
हस्ते नीत्वा विकटलकुटान् नद्धमध्याह्नभोज्यान् ।
गायं गायं मुदितमनसा ग्राम्यगीतानि मार्गे ,
पुष्टांस्तुष्टाञ्जलद-दयया हालिकान् लोकितासे ॥

८३

यैरेवात्राविरतविहितात् सच्छ्रमादुत्तमन्नं ,
लब्ध्वा लोकः कथमपि भुवि प्राणिति प्रत्यहं वै ।
आलोक्यैतान् विगतकलुषान् भावतो देवकल्पान
मग्नीभूतं प्रमदजलधौ सौख्यमीया निकामम् ॥

८४

नेदीयःस्थं निजमवरतेः सत्स्थलं पिप्पलोदं ,
निस्यन्दोत्रं तदनु निगमं दोहदं लम्भयेथाः ।
सर्वान्नीनाः प्रथमविहित-प्रातराशा अपिद्राग् ,
यत्रानेतुं स्वमभिलषितुं वस्तु सोत्कण्ठता स्युः ॥

८५

संकुच्याङ्गं वलयितमुखः किंपचानः सशङ्कः ,
कोषे द्रव्यं क्षिपति हि यथा दृष्टिवर्जं भयेन ।
तद्वत् कोणे विहितवसतिः सम्बलं स्वल्पलज्जः ,
कश्चित् स्वीये वदनविवरे क्षेप्स्यति स्वार्थमग्नः ॥

८६

सिस्नासुः कोऽप्यथ तत इतः स्वेष्टसिद्धयै यतित्वा,
काकस्नानादपि शुचियतो लप्स्यते स्वात्मतोषम् ।
आहृत्यापः कथमपि जवाद् धार्मिकः कोऽपि कौपी-
र्नीचैर्यान-प्रचलनभयाद् भोदयते भीतभीतः ।

८७

आज्ञाचिह्नं निजकरगतं सारथिर्मन्तु कृत्वा ,
वृन्दिष्ठां स्वां कृतिमनुसरन् पत्तनं मेघपूर्वम् ।

दुर्गं तस्मादुदयमथ चोल्लङ्घयन् ब्राह्मणीयं ,
ग्रामं श्रित्वा मुहुरपि पुरो रावटीं नेष्यति त्वाम् ॥

८८

तावल्लोकस्पृण ! शृणु रणन्मञ्जु मञ्जीरमिश्रं ,
मध्ये कक्षं क्वणनममलं तानपूरेण तृप्तम् ।
ब्रह्मानन्दैर्विरचितमलं संसृतिं वीतसारां ,
व्यक्तीकुर्वद् भजन-निवहं याचकैर्गीयमानम् ॥

८९

कोष्ठे कश्चिच्चपलहृदयो व्यस्तदृक् भीतभीतो ,
दृष्टिं यायान्नियतिनिहतस्तत्किमर्थं तवास्य ।
प्रश्नस्याप्युत्तरमुपगतः कोष्ठके यानपत्र—
द्रष्टा दास्यत्यनुपदमथोऽस्माद्गृहीत्वा द्विपाद्यम् ॥

९०

रात्रिश्रान्तं ज्वलनचलनं तुन्दिलं लाहलौघ-
र्यन्त्राच्छुण्डाऽऽकृतिकजलदादाशु संवीनतृड़कम् ।
स्वस्थं तैलादिभिरपि मनाक् कर्तुमात्मानमेव—
प्रोद्बुद्धं सद् दल ! लघु ललन्नेष्यते रत्नपुर्याम् ॥

९१

सज्जीभूयाग्निरथमपरं हस्तसात् कर्तुकामा—
नेकीकृत्याखिलमपि निजं वस्तुजातं प्रयत्नात् ।
दृष्ट्वा साकं त्वमपि रभसादुत्तरीतुं ततस्तैः ,
सन्नद्धं स्याः कतिपयपरैरङ्ग ? सन्देशवाहैः ॥

९२

दूरादेव प्रसृमरयशोभासि-वन्दारुवृन्दैः,
सद्यो यानागमनसमये वेल्लितां वैजयन्तीम् ।
आनन्दोक्तिं जनगणकृतां घण्टिका-वादनञ्च,
श्रुत्वा तौर्यत्रिकमिव कृतं तद्गिरामेऽनुभूयाः ॥

९३

प्राप्योदन्तं भृशमुपसृता बान्धवाः सेवका वा,
यावत्तैस्तैः कृतपरिचयाः स्वागतं व्याहरेयुः ।
अन्विष्टं सत् त्वमपि शकटं तावदन्यं निवेष्टुं,
भृत्यैः पत्रोदवसितपतिप्रैषितैः सत्कृतं स्याः ॥

९४

तूष्णींशीले प्रविशति जनाः सूचयिष्यन्ति कोष्ठे,
नास्ति स्थानं स्थलमपरतो मृग्यतामेवमेव ।
किन्त्वन्यस्मिन् प्रविशति सति स्राक् तदा वावदूके
हस्ताहस्ति प्रयतमनसा तत्र योत्स्यन्ति केचित् ॥

९५

'एषा वृद्धा स्वजनविरहात् कान्दिशीकीव जाता'
'केषामेषाऽस्त्यवनिपतिता क्षुद्रिका मुद्रिकाऽत्र ?'
'ते ते याताः क्वनु हनुमता स्थापितं मित्र ! छत्रं',
भाषा एवं श्रवणपथगाः साधु सेधद्भिर्धेहि ॥

९६

'कुर्वन्ति त्वन्मिलनविधुरा यान ! लोकाः प्रतीक्षा'-
मन्याः कन्या इव शकटिकाः स्नेहसिक्ताः सुसज्जाः

भानोर्घर्मे तपसि निरताः सन्ति गन्तॄन् वरीतुं,
याह्येतस्मादिति'निगदितुं यानमेष्यत्यतोऽग्रे ॥

९७

आसाद्यान्यं रथमथ कियत् सम्प्रतीक्षस्व तावद्,
यावन्नेयात् नव सहचरैः संयुतं यानमन्यत् ।
नीत्वा तत्स्थानपि बहुजनान् त्वं भवेरग्रयायि,
ध्यायं ध्यायं समसुखकरं श्रीपतेः पादपद्मम् ॥

९८

पूर्वं मार्गे जनपदनदीकाननानां कुलेषु —
स्फीता पीता नियतिसुषमामाधुरी नेत्रपात्रैः ।
आलोकेथास्तदपि धरणीं मालवीयां समन्ता—
च्छस्यं शस्यं जगति विदितं वर्ततेऽतीव यस्याः ॥

९९

आद्याऽऽयास्यत्यनुपदमितो नामली नामिका पू—
स्तस्या अग्रे खचितसुषमो जावरा वर्वृतीति ।
पुण्ड्रैः पूर्णाः कतिचन पराश्चारुकान्तारकाद्यै—
राराजन्ते परिसरसृता यत्र नाना शकव्यः ॥

१००

स्वैरं यन्त्रालयवरकृतो बोधयिष्यत्यजस्त्रं,
नादस्तत्र स्वकृतिपटुतां व्यञ्जयन् तत्परत्वम् ।
शुभ्रां कीर्तिं भरतभुवि यच्छर्करा कीर्तयन्ती
नॄणां स्वान्तं रसयति सदा माधुरीभिर्निजाभिः ॥

१०१

प्रज्ञाचक्षुः क्रममनुस्मरन् तावकीने प्रकोष्ठे ,
गोष्ठीं कर्तुं निजभजनतो यर्हि कुर्यात्प्रवेशम् ।
तस्मादेव प्रयतमनसा द्यूतनिन्दा च साकं ,
संश्रोतव्या विविधविषया गीतयो मालवीयाः ॥

१०२

तावच्छ्रान्तं दिनकरकरैर्नीरपानाभिलाषि—
क्लान्ति तान्तामपहृतिकृते क्षुत्तृषोर्मानवानाम् ।
मध्ये रुद्ध्वाऽप्यनतिसमयं धोधरस्यारमेव ,
धावं धावं तव तु शकटं लप्स्यते प्राघुणत्वम् ॥

१०३

अत्रैवोष्णाः सुरसमरिताः कुण्डलिन्यो मिलन्ती—
त्येवं वार्ता क्वचिदपि पुरा संश्रुता यात्रिवर्गैः ।
तत्ताः क्रीत्वा ससुखमनसि प्राश्य सत्यापयन्तो,
यास्यन्तीतो झगिति कचनारं ततोऽग्रे दलोद्दाम् ॥

१०४

भानोरस्तङ्गमनसमयं लक्षयन्तस्तदानीं ,
शुक्लायन्त्रालय–कजवनाद् भृङ्गवत् प्रोद्गतान् नॄन् ।
स्वस्वावासान् प्रति रभसतः संयियासून् विलोक्य
सज्जीभूयास्त्वमपि नियतं स्वं विरामं प्रयातुम् ॥

१०५

आप्रातर्यः सकलभुवनं चारु चंक्रम्यमाणः ,
स्वे स्वे कर्मण्यविरतमहो प्राणिनो योजयित्वा ।

अत्रैवैष्यत्यथ स शिवनातीरशोभाभिकृष्टः,
श्रान्तान् सार्थं विरिरमयिषुर्नीरजाजानिरस्तम् ॥

१०६

पातुं नीरं स्थितवति रवौ तीरदेशे शिवाया,
याने आरुह्य ऋतुफलचयं तत्र विक्रेतुकामाः ।
आयास्यन्ति प्रणयभरितेभ्यो गृहीत्वाऽथ तेभ्यः,
कीर्तिस्तम्भस्थलमपि ततः पश्य मार्गेण गच्छत् ॥

१०७

नव्यं भव्यं सुविजनमनो-मोदकं मन्दसौरं,
वस्तुं देवानपि विवशयामास यः स्वीयकीर्त्या ।
दृष्ट्वा दृष्ट्वा गुणगरिमभिर्ज्ञातसंवीक्षणोत्का,
अत्रैवेता निजपरिजनैः संयुतास्तन्तुवायाः ॥

१०८

नैवासंस्ते कठरजठराऽऽपूरणादेव बन्धो !
धन्यम्मन्या विमलमतयस्तेन सम्मिल्य सर्वैः ।
अत्राकारि प्रियमतितरां मन्दिरं चण्डरश्मे—*
स्त्याप्यस्मान् कथयति कथां यस्य भग्नावशेषः ॥

१०९

दुर्गं दुर्गं हृदयमदुनोत् कस्य नो वीक्ष्य शत्रो—
र्यस्मिन्नासीद्विनिहितमलं द्रव्यजातं हि भूयः ।
रक्षां चक्रुर्भटपरिवृढा दक्षिणे यस्य दक्षा,
वामे वामा रिपुगणकृते श्रीशिवायाः प्रवाहाः ॥

---

* अस्याप्यैतिह्यं "उत्कीर्णलेखाञ्जलि" ना ज्ञेयम् ।

११०

विश्रामस्यान्तिकमुपगतौ तत्र यन्त्रालयौ ते,
नादं कृत्वा प्रिय ! विदधतः स्वागतं प्रोल्लसन्तौ ।
तत्स्वीकृत्योत्तर तरलितस्तर्हि हित्वा प्रकोष्ठं,
प्रेम्णाऽऽयातैर्दलगृहपतेः सेवकैः साकमेहि ॥

१११

"हंहो ! एते हयशकटिका निर्भरं चावदूकाः,
जल्पन्तेऽल्पं नहि कथमिति" स्वान्तसंस्पृग्विचारैः ।
रुध्वाऽप्यग्रे चल हनुमता साकमीशं प्रणम्या —
पश्यच्छोभां दशपुरभुवो यानमारुह्य शीघ्रम् ॥

११२

"राज्यस्यैषा प्रमुखकर-ला वर्तते शुल्कशाला,"
यात्रिभ्यश्च प्रकृति-सरला सौख्यदा धर्मशाला ।
'श्रित्वाऽऽवासं नमिह विरलाः संस्थिता ग्रामपालाः'
'कुर्वन्त्यत्राध्ययनममला मध्यमा प्राग्ध्यवालाः ॥'

११३

'एतद्विद्युद्गृहमथ महानांग्लविद्यालयः सः',
'पाश्चात्यां तौ सृतिमनुसृता सच्चिकित्सालयौस्तः' ।
यत्रैकस्मिन् भवति वपुषः शल्यकृत्यैश्चिकित्सा,
ख्यातश्चान्यो नयनजरुजां शान्तये सिद्धहस्तः ॥

११४

श्रित्वा सूतेर्गृहमिदमहो ! बालकान् वै कियन्तो,
विस्मृत्यार्तिं प्रसवजनितां जन्म नाप्नुज्जनन्यः ? ।

पश्यन्त्वङ्के विदधति यतः क्रीडनं केऽपि छात्राः,
प्रत्यक्षस्य प्रभवतु पुनः किं द्वितीयं प्रमाणम् ? ॥

११५

'किञ्चैतस्या अपि रचनया पुष्करिण्या बुधेन ,
कार्यञ्चैकं फलमुभयथा संज्ञिका साधितोक्तिः ।'
साक्षीभूता कथयति पुरः शालिका बालिकानां,
याऽस्या एव प्रणयपिशुनैः प्रस्तरैर्निर्मिताऽस्ति ।

११६

'शीतेनार्ता बहुतरजनाः सम्बलं कम्बलानां,
लब्ध्वैवेतः शिशिररजनीः सौख्यतो यापयन्ति ।'
'गोशालेयन्त्वतिथिसुखदाऽऽवासशाला विशाला ,
चेष्टाचित्रस्थलमिदमये ! पश्य सा कोटपाली ॥'

११७

'तुष्टाऽत्रत्या भवति कियती वाष्पसंवाहिनीनां ,
यात्रांकृत्वा सपदि जनताऽस्मात् सुकार्यालयाच्च ।'
संलापेन स्थितपुरुषयोरेवमत्राप्तबोधं ,
घण्टानादं शृणु वरघटीसद्मसंश्रावितं वै ॥

११८

'यस्मिन् ग्रामे लसति नगरीपालिका शासनेन ,
प्रोद्बुद्धा वै भवति रुचिरा तत्र तु स्वास्थ्यवृद्धिः ।'
सम्यक् शुद्धिं जलवितरणं दीपकादिव्यवस्थां
कृत्वैवैषा जयति नगरीपालिका मन्दसौरी ॥

११९

विश्रान्त्यै ते सदुदवसितं वर्तते ऽत्रैव तस्मा —
दुत्तीर्यारं वटकरवरैश्चारु संजीव्यमानम् ।
कान्तं कान्तं विपणिलतिका-ग्राहकेन्दिन्दिरैश्च ,
पत्रावासं प्रमुखमभितः कुञ्जकल्पं लभस्व ॥

१२०

यो वै नेत्रेऽभिमुखमनिशं रञ्जयन् दीपिकाभि-
र्युक्तो नाना पवनचपलानीतसद्यन्त्रगीतैः ।
यातायातैरपि बहु नृणां वाहनानां च यत्र ,
व्याप्तः प्राप्तः श्रियमतितमां राजते 'राजमार्गः' ।

१२१

श्रान्तिं हित्वाऽनुभव कुशलं चात्र भूत्वा सनिद्रं,
प्रत्यूषे ते सुदल ! फलिता क्लान्तिरत्रागतस्य ।
किञ्चाऽऽस्ते नो गमनमुचितं तेऽधुना तत्र रात्रौ ,
योग्यायोग्यं गणयति न यो दूरगा तस्य सिद्धिः ॥

१२२

आयातेयं रविसहचरी कान्तिपूरं किरन्ती ,
निद्रामुद्रामपि च सततं मानवानां हरन्ती ।
तस्याः क्षौमं वसनमरुणः सारयन् कुङ्कुमेन ,
भाले भाभी रचयति भृशं मञ्जुलाः पत्रलेखाः ॥

१२३

उत्थायेशं स्मर निजकृतेः पालनायोद्यतं स्या--
स्तावन्नीत्वा दलवितरकः स्थापयन् पेटिकायाम् ।

अन्यैः शाखापुर-वितरकैः साकमौको विसृज्य ,
प्रीतो नीत्वा स 'जनकपुरं' शीघ्रमेववेष्यति त्वाम् ॥

१२४

मार्गे यान्तं निजनिजदलं प्राप्तुकामाः कियन्तः ,
पृष्ट्वा नीत्वा तव सहयुजो भारभाराद्धरन्तः ।
सेत्स्यन्त्यन्ये विनिहतहृदः सम्भविष्यन्ति यस्मा—
दाशैवेका जनयति सतां मानसे दुःखसौख्ये ॥

१२५

'बद्रिश्रेष्ठिप्रवररचिताऽऽरोग्यशालां विशुल्कां,'
दृष्ट्वा सर्पद् भुजगगतिभिर्भ्रामितं यत्र तत्र ।
वीथीष्वन्यास्वपि कतिषुचित् सञ्चरत् त्वं मदीयं,
गेहं पश्येः स्रगिति भवनं 'विश्वनाथाह्वयं' तत् ॥

१२६

पश्चात् कृत्वा 'गणपतिनुतिं वीक्ष्य शृङ्गाटकं' तत् ,
यच्छुद्भूयः सहचरगणेभ्यो विदायं सुखेन ।
मार्गे 'शम्भुं गिरिवरधरं' वन्दमानं सुभक्त्या ,
'जीवागञ्जे' सपदि हि 'जगन्नाथसन्मन्दिरे'ऽयाः ॥

१२७

प्रासादो यः कनककलशैर्मूर्ध्नि सूर्यात्मजानां ,
क्रीडारङ्गस्थल इव लसन् स्फाटिको भाति भाते ।
उच्चैर्वेदाध्ययननिरतैश्छात्रवर्यैः सुजुष्टो ,
मध्ये विद्यालयवरयुतः सन्ततं यश्चकास्ति ॥

१२८

कीदृक् चैतद् रुचिरकलना-कीलितं तोरणं + वै ,
बाला आद्यं पठनमपि किं कुर्वतेऽत्रैव नित्यम् ।
कस्माच्चायं विशति तरसा मानवानां समूहः ?
सञ्चिन्त्यैव प्रविविश जगन्नाथनुत्यै सहैव ॥

१२९

हैमीं मूर्तिं महिषदनुजध्वंसिकायाः सुदिव्यां +
शम्भोर्वक्त्रप्रतिकृतिमथो राजतीं राजमानाम् ।
नुत्वा देवैः सहितमपरः श्रीजगन्नाथनाथं,
भूयः पश्चागतननमनं संविधायोर्ध्वमेहि ॥

१३०

सोपानान्तं तव गतवतः पूर्वमेवाद्दिलक्ष्ये ,
भव्यं * विद्यालयवरगृहं तत्र सम्पत्स्यतेऽरं ।
सत्रा यत्राध्ययनपटुभिश्छात्ररत्नैर्महान्ति ,
द्योतन्नानाविषयखचितग्रन्थरत्नानि सन्ति ॥

१३१

तस्यां विद्यालयभुवि मया कालमाश्रित्य किञ्चित् ,
स्थित्वा प्रीत्या क्रमकमलयोरन्तिके सद्गुरूणाम् ।
नीता शिक्षा सुरवरगिरो 'रामचन्द्रा'भिधास्ते ,
विद्याचार्या मम सुखकरा मातुला वन्दनीयाः ॥

१३२

प्रत्यक्षं यद् विलसति मुदाऽऽवासकं मन्दिरस्य ,
सानोः पश्चायितमतितमां पुण्यभाग् वन्दनीयम् ।

---

+ इदं तोरणं गुरुवर्यैरेवात्र कारितम् ।
+ इयं षोडशतोलक परिमिता गुरुवर्यैरेवात्र समर्पिता ।
* इदं विद्यालयभवनं गुरुवर्यैः प्रचुरद्रव्यव्ययेन कारितं ।
तथा अनेके ग्रन्था विदुषां आचार्याः संगृह्य स्थापिताः ।

सन्माहात्म्यं प्रतिदिनभवं धर्मकृत्यांश्च सर्वा—
नालोक्यैव व्यजनति सदा पिप्पलग्रुर्यदीयम् ॥

१३३

नैके भक्ता गुरुपदयुगं पूजितुं दूरदेशात् ,
कार्याण्यन्यान्यपि च सहसाऽऽवश्यकानि प्रतर्ज्य ।
व्यासीराकादिनमनुपमं लङ्घयित्वा समन्ताद् ,
यत्रायाता यजनमभितो भावपूर्वं चरन्ति ॥

पञ्चभिर्गुरुवर्णनम् — १३४

तस्यां कुट्यां जनपरिवृतान् काष्ठपट्टे निषण्णान् ,
तेजोमूर्तीन् प्रखरतपसा भ्राजमानान् सुशान्तान् ।
आत्मानन्दे रमणकुशलान् जीवजीवातुभूतान् ,
हृष्टांस्तुष्टानतुलितशुभज्ञानकोषेण पुष्टान् ॥

१३५

साक्षाद् वेधा इव विदधतो ज्ञानसृष्टिं जडेषु ,
साक्षान्नारायण इव नृणां रक्षणोद्युक्तचित्तान् ।
साक्षाद् गौरीश्वर इव भुवो नास्तिकोच्छेददक्षान् ,
दत्तात्रेयः पर इव पुनश्चात्र नीतावतारान् ॥

१३६

मन्दं मन्दं प्रणवमननं कुर्वतो ध्यानपूर्वं ,
भक्त्या काश्चित् स्तुतिपदततीः साश्रुनेत्रं गृणानान्
आशावासोधरहरमयान् कर्मवीरान् गभीरान् ,
भव्यैर्भक्तैर्निटिलविहित—श्रेष्ठगन्धत्रिपुण्ड्रान् ॥

१३७

कांश्चिद् भक्तान् मधुरमधुराः सत्कथा भारतीया ,
अन्यान् धन्यान् ललितकविताः सारगर्भाः श्रुतानाम्।
वीक्षन् प्रीत्या सततमितरान् देशना दुःखहर्त्रीः—
र्गीतावाक्यान्यपि कथयतो मानवान् कांश्चिदन्यान्॥

१३८

तत्रायातैः कतिपयबुधैः पाणिनेः शास्त्रचर्चां ,
सूक्ष्मं कैस्कैर्मुनिभिरपरैर्ब्रह्मविद्याविचारम् ।
ऊहं न्याये गहनमथ च ज्योतिषे ज्ञानदानं ,
कुर्वाणांस्तान् वर ! गुरुवरान् वीक्ष्य भक्त्यानतं स्याः॥

१३९

मौनं स्थित्वा स्वजननिवहे वाक्सुधाऽऽप्लावितेन
ह्यद्यात्मानं सफलजननं मन्यमानेन धन्यम् ।
आनन्दाब्धौ तरलिततया मज्जितेनापि तत्र
प्राप्ते काले विनतशिरसा ते त्वयाऽऽवेदनीयाः ॥

१४०

पूज्याः! श्रीमत्क्रमकमलयोश्चञ्चरीको लघीयान्
रुद्रोऽहःस्वेष्वथ विधिवशात् प्रापितो विप्रलम्भम् ।
साष्टाङ्गेन प्रणतिविधिना दण्डवत् संप्रणम्य ,
सन्देशं स्वं विनयसहितो मन्मुखेनेममाह ॥

१४१

यच्छ्रीमत्पत्कमलविमलोपास्तये प्राप्तजन्मा ,
बाल्ये क्रीडाङ्गणमिव भवत्पावनाङ्कं श्रितोऽहम् ।

लालामालाऽऽकुलितलपनो लीलया लाल्यमानो,
भूयंक्रीडं भवति भवति प्राक् सुगार्हस्थ्यभाजि ॥

१४२

राज्ञाऽऽज्ञप्तं श्वपचशिशवः साकमन्यैः पठेयुः,
श्रुत्वैवं तद्विषमसमर्येऽकारि भीष्म-प्रतिज्ञा।
अन्नाम्भोवै मनुमितदिनेष्वञ्जसा वर्जनेनाऽऽ-
यातो भूयः सततमदिशच्चान्यशालां विधातुम् ॥

१४३

धर्मप्राणैर्मनसि विहितो दीर्घदृष्ट्या विचारो,
भूयोऽप्येते निहतमतयो धर्मनाशाय यत्नम्।
कृत्वा बालानधमसरणौ प्रापयिष्यन्ति तस्मात्,
संरुध्यास्मान् सुरवरगिरं पाठयामासुरग्रे ॥

१४४

किं बाऽध्याप्यं रुचिरमिह किं वर्त्मना केन वैते,
पारेशास्त्रं सपदि शिशवो यान्तु ? चैवं विचिन्त्य।
अष्टाध्याय्याश्चरणयुगले स्वेन साकं समर्प्य,
प्रारब्धो नः सरलमतिभिः शब्दशास्त्रे प्रवेशः ॥

१४५

ज्येष्ठभ्रातुर्भवति नियतं जन्मसिद्धं गुरुत्वं,
वर्तन्ते ये मम गुरुवरा मत्सुतस्यापि ते स्युः।
सञ्चिन्त्यैवं मम पितृवरैरर्पितोऽहं भवद्भिः,
शिक्षादानैः सह करुणया पालितो लालितश्च ॥

१४६

काले काले समुषितवता वीक्षिता दानशैल्य –
श्चित्राचार्यायाः सरणिरथ सा, ते तपस्याप्रकाराः ।
आचार्यत्वं, विविधसुकथावाचना, वाचना वै,
शास्त्रार्थाणामपि कुशलता, साधु सेवाऽतिथीनाम् ॥

१४७

लघ्वी शाटी कटितटगता चोपवस्त्रं लघीय–
स्ताभ्यामाच्छादितनिजतनूंस्तेजसा द्योतमानान् ।
वानप्रस्थाश्रममथ शुभं स्वीकृतांस्तद्गृहस्थे,
दृष्ट्वा धत्ते स्म न हृदि जगद् भूरि चित्रं कदानु ॥

१४८

एवं दिष्टे सुतवति भवद्भाविना प्रेरितेव,
ज्येष्ठा माता मम दिवि गता तत्सुनोप्यन्वगात् ताम्
विस्मृत्याहो ! सकलमपि तद् दैवदत्तं विषादं,
दानं कृत्वा सविधि यतितं मंक्षु तुर्याश्रमाय ॥

१४९

सर्वं विप्रार्पणमिति कृतं निश्चितं दूरदूरात्,
श्रुत्वाऽऽयातैर्द्विजवरगणैरीप्सितं किं न लब्धम् ?
किं न प्रापन् दशपुरभवा भूसुरा अप्यभीष्टं ?
दर्शं दर्शं तदिदमखिलं विस्मितो विस्मयोऽपि ॥

१५०

आहूयोचुः स्रगिति सहजं स्वं पितृव्यश्च शीघ्रं,
सज्जौ स्यातां सदुपनयनं स्वस्वसूनोर्विधातुम् ।

कालेतस्मिन्नतिकरुणयाऽनिच्छताऽपि प्रदत्तो,
मह्यं मान्याः ! शुभगुरुमनुस्तेन जातोऽस्मि धन्यः ।

१५१

तं सर्वस्वार्पणमखविधिं प्रेक्ष्य शङ्कान्वितोऽहं,
संश्रुत्य प्राक् कृतवितरणं मोहमस्याः पितुश्च ।
त्यक्त्वा कस्माद् व्रजति न रमा सन्ततं न्यक्कृतेय-
मस्याश्चैषा प्रकृतिरथवा दानमाहात्म्यमेतत् ॥

१५२–५३

शिष्टैर्देव्या अभवदथ वश्चारुदीक्षास्वरूपा,
तां स्वीकृत्य स्वकभुवि 'जयानन्द' नाम्ना प्रसिद्धैः ।
आरब्धं यन्मदुपनयने भोजनं ब्राह्मणानां
तद्धै कस्मिंश्चिदपि सुखदे सन्मुहूर्ते प्रवृत्तम् ॥
स्वीयेग्रामे ह्यथ च युगपद् येन रत्नेन्द्रपुर्याः,
सत्रं दैनन्दिनमनुपमं चालितं मासषट्कम् ।
तृप्तास्तेषु द्विजवरगणा लक्षशः सौख्ययुक्ताः,
किन्नो जाता अहरहरिह स्वादु भुक्त्वा यथेष्टम् ?॥

युग्मकम्

१५४

पश्चाद्यज्ञत्रितयमनघं रुद्रचण्ड्योःश्रुतीनां—
मातुश्चेष्ट्वा सविधि सततं तीर्थयात्रार्थमीयुः ।
केदारेशं हिमगिरिशिरःस्थं प्रणम्य प्रयाता,
बद्रीनारायणचरणयोर्भावपुष्पार्पणाय ॥

१५५

यात्रां कृत्वा द्रविणनिचयैः कारयित्वा 'सुविद्या—
शालाहर्म्यं' नवमथ 'जगन्नाथसत्तोरणादीन्' ।
वाराणस्यां सुरधुनितटे 'श्रीघनश्यामतीर्थैं'—
र्दत्तां दीक्षां सविधि जगृहुस्तत्र तुर्याश्रमस्य ॥

१५६

दण्डं धृत्वा विनयसहितं 'कृष्णलालेति' नाम्ना,
'कृष्णानन्दाह्वयमिह गुरुप्रोक्तमङ्गीकृतञ्च ।
आज्ञां नीत्वा 'विजयनगरे' 'भिल्लवाडादि'पूर्षु, *
ग्रामं ग्रामं सुबहु विहितस्तत्र धर्मप्रचारः ॥

१५७

'आशावासा भव जहिं वृथा तेऽस्ति कौपीन'मेतत्,
देव्याऽऽज्ञप्तं शिरसि विधृतं तद्वदेव प्रयुक्तम् ।
अन्नत्यागं तदनु नितरां स्वीयहस्तेन भोज्यं,
पात्रे पात्रे बहुवितरणं ब्राह्मणेभ्योऽप्यकार्षुः ॥

१५८

अस्वाप्सुर्ये मृदुलशयनीयेऽप्यतृप्ता इदानी—
माश्चर्यं ते विगतवसनाः शेरते काष्ठपट्टे ।
येमिष्टान्नैरमृतमधुरैरप्यतुष्टा अभूवं—
स्तेषां स्वान्तं सुबहु मनुते केवलं तक्रमेव ॥

१५९

'सीतामातु' र्विशदविभवाख्यायिका शंसनीया,
सिद्धिर्दिव्या मम जनकतः 'श्रीरमाकान्त' वर्यात् ।

---

* राजस्थानीय-एतयोर्नगरयोरपि गुरुत्रयाणामाशीर्भिः श्रीरामनाथ रामचन्द्रकोगटा तथा श्रीनारायणलालयकोल महोदयाश्च सुसम्पन्ना अभूवन् । अनेकमासावधि अत्रापि अन्नसत्रं चालितम् ।

हार्दं मातुः सहजवरतः 'श्रीलगोविन्दरामाद्'—
वैदुष्यं वो गुणिजनमुखात् संश्रुतं यर्हि कार्हि ॥
१६०
भूयो वर्षेऽष्टखनखमिते माघशुक्ले स्वहृष्ट्या,
लोकैर्दृष्टं चकितचकितैः सर्वदानं तृतीयम् ।
यस्मिन्नेतः किल मतिमतां सत्परीक्षां जिघृक्षु—
र्मृत्युः साक्षादपि लघु पराभूत् तपस्याबलेन ॥
१६१
नामं नामं चरणयुगले मस्तकं मामकीनं,
धारं धारं हृदयपटलेऽहर्दिवं हे यतीन्द्राः !
अक्ष्णोरग्रे घटितघटना जीवने संस्फुरन्ती—
रेताः सर्वाः पुनरपि हृदा प्रत्यहं संस्मरामि ॥
१६२
याता राकाः कतिचन न यास्वर्चनेच्छावतापि—
प्राप्तो योग्यावसर इति मे मानसं दन्दहीति ।
वर्षे चास्मिन्नपि नहि तथा शक्यमासीदतो मां,
क्षन्त्वा भूयोऽप्यतिकृतकृपैराशिषा योजनीयः ॥
१६३

खशशिनखमितेऽब्दे पावनाषाढमासे,
शुचियुतशरतिथ्यां श्रीगुरौ मोहमय्याम् ।
शुभमरचयदेतद् 'रुद्रदेवत्रिपाठी,'
गुरुवरपदपद्म—प्रीतये 'पत्रदूतम्' ॥

॥ इति पत्रदूतं खण्डकाव्यं समाप्तम् ॥




महिष-दनुजध्वंसिकाया हैमी मूर्त्तिः
[ पत्रदूत-श्लोक-१२९-प्रथम-पद-सूचिता ]



श्रीशिवपंचायतनम्
[ पत्रदूत—श्लोक-१२९- [ चतुर्थपदसूचितम् ]

( श्रीस्वामिचरणानां दीक्षागुरवः )



परमपूज्य-प्रातःस्मरणीय श्रीघनश्यामानन्दतीर्थमहाभागाः

( संस्थापकाः—काशीस्थ मुमुक्षुभवनस्य )



[ पत्रदूत-श्लोक-१५५ तृतीयपदसूचिताः ]

## पत्रदूतसम्बन्धिनोऽभिप्रायाः

कालिदासपुरे रम्ये, कालिदासोऽपरोऽभवत् ॥
रुद्रदेवत्रिपाठीति, यत्काव्यं मेघदूतवत् ॥१॥
पत्रदूतं, तथापीदं मेघदूताच्छुभंमहत् ॥
स्मरदोषान्धयक्षेण, रागेणैवं प्रियांप्रति ॥२॥
न चित्रमान्ध्यरागाभ्यां, मेघे दूतत्त्वकल्पना ॥
लोकातीता गुरोःशक्ती, दृष्ट्वा प्राप्ता विवेकदृक् ॥३॥
तया दृष्ट्वाऽनुरागेण, पत्रदूतं गुरून् प्रति ॥
विख्यातं युक्तियुक्तंच, पत्रेयद्दौत्य कर्म तत् ॥४॥

नर्मदोत्तरतटनिवासी ब्रह्मचारी शङ्करानन्दः

(१) श्रीरुद्रदेवजी त्रिपाठिनः 'पत्रदूत' नामकं खण्डकाव्यंमुहुर्मुहु रवलोक्यापि तृप्तिन्नलब्धवानहम् ।

काव्येऽस्मिन्मुम्बापुरीत आरभ्य दशपुरस्थ श्रीगुरुचरणकुटीर-पर्यन्तस्य मार्गादिवर्णनमतीव सरसं सुललितं प्राञ्जलमाह्लादकं सजीवं भावपूर्णञ्चास्ति, पुनश्चेदङ्काव्यमनन्तश्रीविभूषितश्रीस्वामि-कृष्णानन्दतीर्थमहाभागानां प्रत्यक्षानुभूतोदात्तस्फीतचरित्रस्य या-थार्थ्यवर्णनेन पावनं धन्यंचाभवत् ।

विदूषां काव्यरसरसिकानामन्येषाञ्चपुरतोमेसानुरोधनिवेदनम्,-यत्तं सकृदप्यभिनवमिदंकाव्यमवलोक्य यूनोरस्यकवेरुत्साहवृद्ध्या सहैव स्वकीयगुणग्राहकतामपि प्रकटी कुर्युः ।

अन्तेचाहं कवेः सर्वविधामुत्तरोत्तरामुन्नतिङ्कामये ।

संस्कृत विद्यालय. सीतामऊ शितिकण्ठ शास्त्री साहित्याचार्यः

विलोक्य त्रिढुँस्तव पत्रदूतं,बभूव चित्ते विपुलः प्रहर्षः ।
सदोन्नतिं ते भुवि कामयानः सधन्यवादं ह्यभिनन्दयामि ॥१॥

बृहन्मठः
सीतामऊ (म. भा } महन्त श्रीधनगिरिः शास्त्री, काव्य-पुराणतीर्थः, विशादश्च.

पण्डितप्रवरस्य श्रीरुद्रदेवस्य इदं काव्यं भारते अद्य नष्टप्रायां दूतकाव्यप्रणयनपरंपरां पुनरुज्जीवयति। भूलोकस्य अमरावत्यां मुम्बैपट्टणे निवसन्नयं कविः गुरुपूर्णिमायां मन्दसौरस्थितान् पूज्यपाद श्रीकृष्णानन्दस्वामिचरणान् पूजयितुं नाशक्नोत् । अतः पत्रमेव मित्रं दूतं ंच आकलय्य तन्मुखेन प्रणाम पुरस्सरं सन्देशं प्रेषयति । अत्र च लघुनि सन्देशकाव्ये व्यावर्णितं श्रीमत्परमपूज्यानां अवधूतशिखामणीनां श्रीकृष्णानन्दस्वामिपादानां महामहिम औदार्यं वैराग्यं दातृत्वं च श्रुत्वा पत्रेण सह वाचकानामपि मस्तकं परगुरुवरान् वीक्ष्य भक्त्याऽऽनतं स्यादेव । अत्र सर्वत्रापि सहजसुन्दरा सरलसुभगा च अस्य कवेः मधुपाकोपमा शैली मनो विनोदयति रसिकानाम् । आह्वयति च हृदयानि । मोहमयीतः मन्दसौरपर्यन्तस्य धूमशकटीप्रयाणस्य वर्णनावाष्पयानविश्रामधाम्नः विविधदृश्यानां चारुचित्रणं प्रयाणिकानां स्वार्थसाधकस्वभावनिश्लेषणं अन्ये च धूमशकटीप्रवाससम्भ्रमाः हास्यपूरितया सरलसुन्दरया स्वभाववन्धुरया सरण्या निरूपिताः । सकृदनुवाच्यैव अस्य स्वारस्यमनुभोक्तव्यं वाचकैः ।

मधुरवाणी कार्यालय,
गदग (जि. धारवाड़)

श्रीपंडरीनाथाचार्यः
सम्पा. 'मधुरवाणी'

# शुद्धिपत्रम्



| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ आ. | ६ | विन्दन्ते | विन्दते |
| ३ ,, | ११ | मार्गषोर्ष | मार्गशीर्ष |
| ७ ,, | ६ | वेधं | विधं |
| ७ ,, | १४ | मृत | मृतो |
| ८ ,, | १२ | कल्वनं | कल्पनं |
| २ | १० | देवी | देवि |
| ४ | ४ | विचराणि | विचाराणि |
| ७ | ११ | कश्चित् | कच्चित् |
| ८ | ५ | दिन वषः | दिनमुषः |
| ६ | १८ | स्यन्दम | स्यन्दन |
| ११ | ७ | नौका | नौकाः |
| ११ | १२ | त्वादषां | त्वादशां |
| १६ | ८ | यन्त्रैण | यन्त्रेण |
| १६ | १५ | तत्रेशानां | तत्रेशानं |
| १७ | ६ | माभातिक | प्राभातिक |
| ,, | ,, | पचनतः | पवनतः |
| १८ | ११ | चित्रमानो | चित्रभाजो |
| ,, | १८ | मुल्का | मुक्ता |
| २० | १० | दृष्ठि | दृष्टि |

| | | | |
|---|---|---|---|
| ,, | १४ | यतो | युतो |
| २४ | ६ | भरिताः | भरिताः |
| २६ | १४ | स्तुता | स्तुतौ |
| २६ | २ | सेववे | सेवे |
| ३० | २८ | अनेको | अनेके |
| ३२ | ३ | वीज्ञान् | विज्ञान् |
| ,, | १८ | यच्श्री | यच्छ्री |

# अस्यैव कवेरन्यत् प्रकाशनम्



१. कालिदास-प्रेरितः शिल्पश्रृङ्गारः (संस्कृतानुवादः) — मूल्य १-०-०
२. विनोदिनी (हास्यकविता संग्रहः) — ,, ०-८-०
३. प्रेरणा (संस्कृत-गीति-संग्रहः) — ,, ०-१०-०
४. पत्रदूतम् (खण्डकाव्यम्) (द्वि. सं.) — ,, ०-८-०

—प्रकाशनार्थं सन्नद्धम्—

५. चित्रालङ्कार-चन्द्रिका [विविध-चित्रबन्ध-बन्धुरा]
६. अनुज-विजय [खण्डकाव्य] हिन्दी
७. केका (कविता सङ्ग्रह) ,,
८. गायत्री-लहरी (संस्कृत)
९. स्मरण-कला (हिन्दी अनुवाद)

प्राप्ति स्थानम् —

श्रीमहेश्वरमुद्रणायन्त्रालय

मन्दसौर (मध्यभारत)



—श्री महेश्वर प्रिंटिंग प्रेस मन्दसौर—

